श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीसरस्वत्यै नमः ॥ नत्वा साम्बं शिवं भक्त्या विद्वदानन्दसिद्धये ॥ विवेकचूडामणिना प्रत्यक्त्व-त्वं प्रकाश्यते ॥ १ ॥ सारस्वतान्वयोद्भूतहरनामद्विजन्मना ॥ विवेकचूडामणये टीकाऽऽरब्धा सुबोधिनी ॥ २ ॥ अथेह खलु सकलसुजनान-न्दप्राप्तिकामनया कृतावतारः साक्षाच्छङ्करः श्रीभगवाँञ्छङ्कराचार्यः शास्त्रार्थविचारसमर्थानामनात्मशास्त्रानधिगतसच्चिदानन्दैकरसात्मस्वरू-पावगतये षोडशभाष्याणि विधाय अनाद्यविद्याप्रसूतमहामोहान्धकारान्धीकृतज्ञानचक्षुषामसच्छास्त्रप्रणेतॄणां मतानि च विधूय महच्छास्त्र-विचारासमर्थानां मुमुक्षूणामनायासेनात्मावगतये सुखबोधाय शिष्यप्रश्नगुरूपदेशरीत्या विवेकचूडामणिनामानं संक्षिप्तग्रन्थं चिकीर्षुस्तन्नि-

सर्ववेदान्तसिद्धान्तगोचरं तमगोचरम् ॥ गोविन्दं परमानन्दं सद्गुरुं प्रणतोऽस्म्यहम् ॥ १ ॥

र्विघ्नपरिसमाप्तिप्रचयगमनाभ्यां परमेश्वरगुरुनमस्कारात्मकं मङ्गलं श्लोकेनोपनिबध्नाति सर्ववेदान्तेति- अहं गोविन्दं प्रणतोऽस्मि प्रकर्षेण मनोवाक्कायैर्नतोऽस्मीत्यर्थः। गोविन्दपदार्थमाह-गोभिर्वाणीभिर्वेदान्तवाक्यैर्विद्यते लभ्यते ज्ञायते इति गोविन्दस्तं वेदान्तैकवेद्यं परमा-त्मानमित्यर्थः । गुरुनमस्कारपक्षेतु गां पृथिवीं विन्दति प्राप्नोति जनानुकम्पया पार्थिवशरीरं गृह्णातीति गोविन्दयोगीन्द्रनाम्ना प्रसि-द्धं अखण्डैकरसात्मस्वरूपैक्यं गतत्वात्परमानन्दं परमात्मानमित्यर्थः । कथंभूतं गोविन्दं सर्ववेदान्तसिद्धान्तगोचरं सर्वेषां वेदान्तानां यः सिद्धान्त अद्वितीयत्वं स्वप्रकाशत्वं च तस्य गोचरं अद्वितीयत्वेन प्रतिपाद्यमित्यर्थः अगोचरं- अविषयम् । वाङ्मन आदीनामविषयम् ।

प्रमांणान्तराविषयमित्यर्थः अवेद्यतयैव सर्वसाक्षित्वेन स्वयंप्रकाशत्वेन च प्रत्यक्षमित्यर्थः अन्यदेव तद्विदितादथो अविदितादधीति श्रुतेः। विदितं ज्ञानविषयं अविदितम् ज्ञानाविषयं तदुभयव्यतिरिक्तम् भावाभावसाक्षिणमित्यर्थः परमानन्दम्— परैर्ब्रह्मादिभिर्मीयते स्वस्वरूपतयानुभूयते इति परमः परमश्चासावानन्दश्च परमानन्दः ब्रह्मादीनामपि निरुपाधिकाखण्डैकरसानन्दस्वरूपभूतमित्यर्थः पुनश्च सद्गुरुम् सत आत्मतत्वस्य गुरुरुपदेष्टा इति सद्गुरुस्तं सतां गुरुं सद्गुरुमिति वा। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मा इति श्रुतेर्ब्रह्मण उपदेष्टारम् गृशब्दे क्र्यादिकः कृग्रोरुच्चेति कुः प्रत्ययः। उच्चान्तादेशो रपरः गुरुर्महत्यांगिरसे पित्रादौ धर्मदेशके इति हैमः

जन्तूनां नरजन्मदुर्लभमतः पुंस्त्वं ततो विप्रता तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात्परम् ॥ आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थितिर्मुक्तिर्नो शतजन्मकोटिसुकृतैः पुण्यैर्विना लभ्यते ॥ २ ॥

इति गुरुपक्षे तु सद्गुरुरूपेणावतीर्णं परमात्मानमित्यर्थः ॥ १ ॥ तत्रादौ वेदान्तनिष्ठाया दौर्लभ्यं द्योतयन् विदुषा ब्राह्मणेन तु अवश्यं ब्रह्मविचारः कर्तव्य इत्याह जन्तूनामिति— प्रथमतस्तु जीवानां मनुष्यशरीरमेव दुर्लभम्। अतो मनुष्यशरीरप्राप्तावपि स्त्रीशरीरप्राप्तेः सकाशात्पुंस्त्वं पुरुषशरीरप्राप्तिर्दुर्लभा। ततोपि विप्रता ब्राह्मणशरीरप्राप्तिर्दुर्लभा तस्माद्विप्रतालाभतोपि वैदिकधर्ममार्गतत्परता दुर्लभा अस्माद्वैदिकधर्मपरत्वाद्विद्वत्वं ज्ञातशास्त्रतात्पर्यत्वं दुर्लभं विद्वत्त्वादपि आत्मानात्मविवेचनं दुर्लभं अस्मादपि स्वनुभवःसम्यक्कृतया स्वस्वरूपानुभवो

दुर्लभः स्वस्वरूपानुभवादपि ब्रह्मात्मना संस्थितिर्मुक्तिर्दुर्लभा सा मुक्तिः शतजन्मकोटिभिः सुकृतैः सम्यक्तया कृतैः पुण्यैर्विना न लभ्यत इत्यर्थः पुनर्मनुष्यत्वादित्रयस्य दुर्लभतामाह दुर्लभमिति– प्रथमं तु मनुष्यत्वं दुर्लभम् तत्रापि मुमुक्षुत्वं मोक्षेच्छावत्वं तत्रापि महापुरुषस्य ब्रह्मविदः संश्रयः समागमः एतत्त्रयाणामीश्वराराधमजन्यप्रसादहेतुकत्वात् ॥ ३ ॥ मनुष्यशरीरं प्राप्य मुक्तौ यत्नमकुर्वाणस्य दोषमाह लब्ध्वेति– कथंचिदिति अलभ्यलाभोक्तिः कथंचित्पूर्वपुण्योदयेन दुर्लभं मनुष्यशरीरं लब्ध्वा तत्रापि पुंस्त्वं पुरुषभावं तत्रापि श्रुतिपारदर्शनं ब्रह्म-

दुर्लभं त्रयमेवैतद्देवानुग्रहहेतुकम् ॥ मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥ ३ ॥ लब्ध्वा कथं-
चिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ॥ यस्त्वात्ममुक्तौ न यतेत मूढधीः स ह्यात्म-
हा स्वं विनिहंत्यसद्ग्रहात् ॥ ४ ॥ इतः कोन्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ॥
दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥ ५ ॥

विचारसमर्थं विप्रशरीरं लब्ध्वा यस्तु पुरुष आत्ममुक्तौ न यतेत स यतोऽसद्ग्रहात् असति मिथ्याभूते देहादौ तादात्म्याध्यासात् देहादिकमात्मत्वेन गृहीत्वा स्वं आत्मानं परमानन्दरूपं स्वतः प्रकाशमानमपि विनिहंति मृतकमिव परित्यजति तत्रोपेक्षां करोतीत्यतो विमूढधीरेव स्वार्थे प्रमत्तत्वात् ॥ ४ ॥ एतदेव स्फुटयति इतः कोन्विति– नु इति वितर्के इत अस्मात्पुरुषात्परो मूढात्मा कोस्ति न कोपी-

त्यर्थः । कस्मात् यस्तु स्वार्थे स्वप्रयोजने प्रमादं आलस्यं करोति कोसौ प्रमादः दुर्लभं पुरुषसंबंधिनं मनुष्यशरीरं प्राप्य प्रमाद्यति मुक्तौ सावधानो न भवतीत्यर्थः ॥ ५ ॥ मुक्तौ आत्मैक्यबोध एव मुख्य इत्याह वदन्त्विति- पुरुषाः शास्त्राणि पठित्वा वदन्तु वादं कुर्वन्तु यज्वानो भूत्वा देवान् यजन्तु यज्ञादिकर्माणि कुर्वन्तु उपास्यदेवताः भजन्तु तथापि ब्रह्मात्मैक्यबोधेन विना ब्रह्मणां शतान्तरेपि व्यतीते मुक्तिर्न सिध्यति ॥ ६ ॥ अत्र श्रुतिं प्रमाणयति अमृतत्वस्येति- साहोवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा

वदन्तु शास्त्राणि यजन्तु देवान्कुर्वन्तु कर्माणि भजन्तु देवताः ॥ आत्मैक्यबोधेन विनापि
मुक्तिर्न सिद्ध्यति ब्रह्मशतांतरेपि ॥ ६ ॥ अमृतत्वस्य नाशास्ति वित्तेनेत्येव हि श्रुतिः ॥
ब्रवीति कर्मणो मुक्तेरहेतुत्वं स्फुटं यतः ॥ ७ ॥

स्यात्स्यां न्वहंतेनामृता आहो नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳस्यादमृतत्वस्य तु नाशास्ति वित्ते- नेति अस्यार्थः हे भगो भगवन् यत् यदि नु यदि चेत् इयं पृथिवी वित्तेन मनोभिलषितसर्वसंपत्या पूर्णा सती मे मम मदधीनास्यात्तेन ॥ २ ॥ सर्वपृथिवीलाभेनाहं अमृता मुक्ता नु स्यां भविष्यामि आहो न मुक्ता भविष्यामीति पृष्टो याज्ञवल्क्य आह नेति । वित्तेन मुक्ता न भवि-

ष्यसि किं तर्हि यथा उपकरणवतां धनिनां जीवितं भोजनवस्त्रादिलाभेन सुखपूर्वं स्यात्तथैव ते जीवितं सुखेन स्यात् अमृतत्वस्य मोक्षस्य तु आशा वित्तेन न पूर्णा भवति इत्येव हि श्रुतिः कर्मणो मुक्तेरहेतुत्वं प्रकारणात्वं स्फुटं ब्रवीति कथयति ॥ ७ ॥ मुक्तौ यत्नः कार्य इत्याह अतइति- यस्माद्विमुक्तावेव सुखं नान्यत्र अतः कारणात् विद्वान् विमुक्त्यै मोक्षार्थमेव प्रयतेत यत्नं कुर्यात् कथंभूतः सन् संन्यस्ता बाह्यार्थेषु सुखस्पृहा सुखेच्छा येन स एतादृशः सन् पुनः कथंभूतः। सन् सन्तं श्रेष्ठं सद्गुणविशिष्टं महान्तं उदारात्मानं पूर्णात्मज्ञानप्रद-

अतो विमुक्त्यै प्रयतेत विद्वान्संन्यस्तबाह्यार्थसुखस्पृहःसन् ॥ संतं महान्तं समुपेत्य देशिकं तेनोपदिष्टार्थसमाहितात्मा ॥ ८ ॥ उद्धरेदात्मनात्मानं मग्नं संसारवारिधौ ॥ योगारूढ-त्वमासाद्य सम्यग्दर्शननिष्ठया ॥ ९ ॥

त्वात्पूजार्हमित्यर्थः। आत्मज्ञं देशिकं उपदेष्टारं समुपेत्य प्राप्य तेनोपदिष्टेऽर्थे सम्यक् आहितः समर्पित आत्मा मनो येन स इत्यर्थः ॥ ८ ॥ आत्मोद्धारः कर्तव्य इत्याह उद्धरेदिति- संसारसागरे मग्नं आत्मानं आत्मना विवेकवता मनसा उद्धरेत् किं कृत्वा सम्यग् दर्शननिष्ठया संशयविपर्ययरहितात्मैकनिष्ठचित्तवृत्या योगारूढत्वं नाम इन्द्रियविषयेषु सर्वकर्मसु चासक्तिं त्यक्त्वा सर्वसंकल्पत्यागपूर्वकात्म-

स्थितिरूपं आसाद्य आत्मानं संसारसमुद्राद्द बहिर्निष्कासयेत् ॥ ९ ॥ तत्रप्रकारमाह संन्यस्येति– धीरैः उद्वेगशून्यैः पण्डितैः शास्त्रतात्पर्याभिज्ञैः संसारबंधनिवृत्तये सर्वकर्माणि संन्यस्य त्यक्त्वा आत्माभ्यास उपस्थितैः तत्परैर्यत्यतां यत्नः कर्तव्यः ॥ १० ॥ कर्म तु चित्तशुद्ध्यर्थं नात्मज्ञानार्थमित्याह चित्तस्येति– कर्म तु चित्तशुद्धये समर्थं भवति वस्तूपलब्धये वस्तुज्ञानार्थं न समर्थं वस्तुसिद्धिः पदार्थज्ञानं

संन्यस्य सर्वकर्माणि भवबन्धविमुक्तये ॥ यत्यतां पण्डितैर्धीरैरात्माभ्यास उपस्थितैः ॥ १० ॥
चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ॥ वस्तुसिद्धिर्विचारेण न किंचित्कर्मकोटिभिः ॥ ११ ॥
सम्यग्विचारतः सिद्धा रज्जुतत्वावधारणा ॥ भ्रान्तोदितमहासर्पभयदुःखविनाशिनी ॥ १२ ॥
अर्थस्य निश्चयो दृष्टो विचारेण हितोक्तितः ॥ न स्नानेन न दानेन प्राणायामशतेन वा ॥ १३ ॥

तु विचारेण भवति वस्तुस्वरूपज्ञाने कर्मकोटिभिरपि किंचित्प्रयोजनं न सिद्ध्यति ॥ ११ ॥ भ्रमनिवृत्तावधिष्ठानज्ञानं कारणमित्याह सम्यगिति– रज्जुतत्वावधारणा रज्जुस्वरूपज्ञानं सम्यग्विचारतः दीपादिप्रकाशसहितरज्जुस्वरूपावेक्षणरूपात् सिद्धा प्रसिद्धा कथंभूता रज्जुतत्वावधारणा भ्रांतस्य पुरुषस्य भ्रांत्युत्पन्नमहासर्पभयजनितकंपादिदुःखविनाशिनी ॥ १२ ॥ वस्तुसिद्धौ विचारो मुख्य इत्याह अर्थस्येति–

अर्थस्य पदार्थस्य निश्चयः स्वरूपज्ञानं विचारेण तत्स्वरूपदर्शनानुकूलोपायेन हितोक्तितः तत्स्वरूपाभिज्ञदयालुपुरुषोक्तितः तदुपदेशात् दृष्टः अनुभूतः अन्यैः स्नानेन दानेन प्राणायामादिभिश्च पदार्थस्वरूपनिश्चयो न भवतीत्यर्थः ॥ १३ ॥ अधिकारिणि सत्येव विचार इत्याह अधिकरणमिति- विचारस्य फलसिद्धिर्यथार्थज्ञानम् विशेषतया अधिकारिण एव भवति नानधिकारिण उपायाविचारानुकूला एका-

अधिकारिणमाशास्ते फलसिद्धिर्विशेषतः। उपाया देशकालाद्याःसंत्यस्मिन्सहकारिणः ॥ १४ ॥
अतो विचारः कर्तव्यो जिज्ञासोरात्मवस्तुनः। समासाद्य दयासिन्धुं गुरुं ब्रह्मविदुत्तमम् ॥ १५ ॥
मेधावी पुरुषो विद्वानूहापोहविचक्षणः। अधिकार्यात्मविद्याया मुक्तलक्षणलक्षितः ॥ १६ ॥

न्तादिगुणविशिष्टादेशाः ब्राह्मयमुहूर्तादिकाला आदिशब्दादुपदेष्ट्रादयश्चोपाया अस्मिन्नधिकारिणि सत्येव संति फलदा भवति नान्यथेति ॥ १४ ॥ गुरुसमीपं गत्वा विचारः कर्तव्य इत्याह अत इति- अतः अस्मात्कारणात् जिज्ञासोरितिकर्त्तरिषष्ठी जिज्ञासुना ब्रह्मविदुत्तमं दयासिंधुं गुरुं आसाद्य आत्मवस्तुनः विचारः कर्तव्य इति ॥ १५ ॥ अधिकारिलक्षणमाह मेधावीति- यः पुरुषो मेधावी श्रुतस्य धार-

सायां समर्थः तथाप्रश्नोत्तरविज्ञाने चतुरः वेदान्तशास्त्रोक्ताधिकारिलक्षणयुक्तश्च स आत्मविद्यायाः श्रवणे मनने चाधिकारी भवति ॥ १६ ॥ अधिकारिण एव जिज्ञासायोग्यतेत्याह विवेकिन इति- यः पुरुषः सत्यमिथ्यावस्तुविवेकवान् तथा सर्वविषयेषु विरक्तः शमादिषड्गुणयुक्तो मोक्षेच्छावाँश्च तस्यैव ब्रह्मजिज्ञासायां योग्यता विद्वद्भिर्मता ॥ १७ ॥ साधनसंख्यामाह साधनानीति- अत्रात्मजिज्ञा-

विवेकिनो विरक्तस्य शमादिगुणशालिनः ॥ मुमुक्षोरेव हि ब्रह्म जिज्ञासायोग्यता मता ॥१७॥
साधनान्यत्र चत्वारि कथितानि मनीषिभिः॥येषु सत्स्वेव सन्निष्ठा यदभावे न सिद्ध्यति ॥१८॥
आदौ नित्यानित्यवस्तुविवेकः परिगण्यते ॥ इहामुत्र फलभोगविरागस्तदनन्तरम् ॥१९॥

सायां चत्वारि साधनानि मनीषिभिर्विद्वद्भिः कथितानि येषु साधनेषु सत्सु विद्यमानेषु एव सन्निष्ठा आत्मनिष्ठा सिद्ध्यति यदभावे येषां साधनानामभावे आत्मनिष्ठा न सिद्ध्यति ॥ १८ ॥ तन्नाम्ना गणनामाह आदाविति- प्रथमसाधनं नित्यानित्यवस्तुविवेको गण्यते। तदनंतरं द्वितीयं साधनमस्मिँल्लोके परलोके च यानि फलानि तद्भोगे विरागः। तृतीयं साधनं शमादिषट्कसंपत्तिः। चतुर्थसाधनं मुमुक्षुत्वं।

उपरतिमाह– अंतःकरणवृत्तेर्बाह्यपदार्थानां स्मरणाभाव एषोत्तमा उपरतिः ॥ २४ ॥ तितिक्षामाह– सहनमिति तन्निवृत्त्युपायाऽनारंभपूर्वकं चिंताविलापरहितं यत्सर्वदुःखानां सहनं सा तितिक्षा निगद्यते कथ्यते चिंता स्वमनसि दुःखित्वं विलापः अन्येभ्यः स्वदुःखनिवेदनमिति ॥ २५ ॥ श्रद्धामाह– शास्त्रेति शास्त्रस्य वेदान्तवाक्यस्य गुरुवाक्यस्य च यथार्थबुद्ध्या हृदि निश्चयो यः सा सद्भिः सज्जनैः

उभयेषामिन्द्रियाणां स दमः परिकीर्तितः ॥ बाह्यानालम्बनं वृत्तेरेषोपरतिरुत्तमा ॥२४॥
सहनं सर्वदुःखानामप्रतीकारपूर्वकम् ॥ चिन्ताविलापरहितं सा तितिक्षा निगद्यते ॥२५॥
शास्त्रस्य गुरुवाक्यस्य सत्यबुद्ध्यवधारणम् ॥ सा श्रद्धा कथिता सद्भिर्यया वस्तूपलभ्यते ॥२६॥
सर्वदा स्थापनं बुद्धेः शुद्धे ब्रह्मणि सर्वदा ॥ तत्समाधानमित्युक्तं न तु चित्तस्य लालनम् ॥२७॥
अहंकारादिदेहान्तान् बन्धानज्ञानकल्पितान्॥स्वस्वरूपावबोधेन मोक्तुमिच्छा मुमुक्षुता ॥२८॥

श्रद्धा कथिता यया श्रद्धया वस्तुपरिज्ञानं भवति ॥ २६ ॥ सर्वदा सर्वकाले सर्वप्रकारेण बुद्धेर्यत् शुद्धब्रह्मणि स्थिरीकरणं चित्तस्य न तु लालनं चित्तस्य स्वतन्त्रप्रवृत्तेर्निरोधश्च समाधानं इति सद्भिरुक्तम् ॥ २७ ॥ मुमुक्षुतामाह– स्वस्वरूपज्ञानेन अज्ञानकल्पितान् अहंका- ॥ ५ ॥

मोक्षेच्छा इति वेदान्तेषु स्फुटमिति ॥ १९ ॥ विवेकस्वरूपमाह ब्रह्मेति- ब्रह्म सत्यं जगन्मिथ्येत्येवंरूपो निश्चयः सोयं नित्यानित्यवस्तु-विवेकः कथितः ॥ २० ॥ वैराग्यस्वरूपमाह तद्वैराग्यमिति- देहादारभ्य ब्रह्मलोकपर्यंते अनित्ये भोगार्हवस्तुनि दर्शनश्रवणादिद्वारा या त्यागेच्छा ऐहिकभोगेषु दर्शनेच्छायास्तत्प्राप्तिसंकल्पस्य त्यागः पारलौकिकभोगेषु श्रवणेच्छाया अपि निवृत्तिः किं पुनः प्राप्तीच्छायाः तद्वै-

शमादिषट्कसंपत्तिर्मुमुक्षुत्वमिति स्फुटम् ॥ ब्रह्मसत्यं जगन्मिथ्येत्येवंरूपो विनिश्चयः ॥२०॥
सोयं नित्यानित्यवस्तुविवेकः समुदाहृतः ॥ तद्वैराग्यं जिहासा या दर्शनश्रवणादिभिः ॥ २१ ॥
देहादिब्रह्मपर्यन्ते ह्यनित्ये भोगवस्तुनि ॥ विरज्य विषयव्राताद्दोषदृष्ट्या मुहुर्मुहुः ॥ २२ ॥
स्वलक्ष्ये नियतावस्था मनसः शम उच्यते ॥ विषयेभ्यः परावर्त्य स्थापनं स्वस्वगोलके ॥ २३ ॥

राग्यमित्यर्थः ॥ २१ ॥ शममाह विरज्येति- एवमुक्तप्रकारेण पुनः पुनर्दोषदृष्ट्या विषयसमुदायाद्वैराग्यं प्राप्य स्वलक्ष्ये आत्मनिश्चये या मनसो नियतावस्था निश्चलतयास्थितिः स शम उच्यते ॥ २२ ॥ दममाह विषयेभ्य इति- दर्शेन्द्रियाणि स्वस्वविषयेभ्यः सन्निवर्त्य तेषां स्वस्वगोलके स्थाने स्थापनं स्थिरीकरणं यत्स दमउच्यते ॥ २३ ॥

रादिदेहांतान् बंधान् त्यक्तुं या इच्छा तीव्रा चित्तवृत्तिः सा मुमुक्षा इति ॥ २८ ॥ मुमुक्षुतायाः स्वभावमाह सा इयं मुमुक्षुता मंदमध्यमरूपापि जाता सती गुरोः प्रसादात् वैराग्येण शमादिना प्रवृद्धा फलं मोक्षं प्रसूयते साधयतीत्यर्थः ॥ २९ ॥ यस्य पुरुषस्य वैराग्यं मुमुक्षुत्वं च तीव्रमधिकं पूर्णं विद्यते तस्मिन्नेव पुरुषे शमादयः अर्थवन्तः प्रयोजनकरा ज्ञानोत्पादकाः फलवन्तो मोक्षसाधकाः स्युः नान्यत्रेत्यर्थः ॥ ३० ॥ एतयोर्विरक्तत्वमुमुक्षयोर्यस्मिन्मंदता शिथिलता तत्र मरुभूमौ ऊषरभूमौ यथावृष्टं सेचितं वा सलिलं फलं नोत्पाद-

मंदमध्यमरूपापि वैराग्येण शमादिना ॥ प्रसादेन गुरोः सेयं प्रवृद्धा सूयते फलम् ॥ २९ ॥
वैराग्यं च मुमुक्षुत्वं तीव्रं यस्य तु विद्यते ॥ तस्मिन्नेवार्थवंतः स्युः फलवन्तः शमादयः ॥ ३० ॥
एतयोर्मंदता यत्र विरक्तत्वमुमुक्षयोः ॥ मरौ सलिलवत्तत्र शमादेर्भानमात्रता ॥ ३१ ॥
मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी ॥ स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते ॥ ३२ ॥

यति तथा शमादेर्भानभात्रता शमादयः प्रतीयंते न फलं मोक्षं साधयन्तीत्यर्थः ॥ ३१ ॥ मोक्षसाधनेषु भक्तिविशेषस्याधिक्यमाह ॥ मोक्षकारणेति—मोक्षकारणसामग्र्यां मोक्षकारणसाधनानां मध्ये भक्तिरेव गरीयसी अधिकतया साधनभूता शीघ्रं मोक्षप्रदेत्यर्थः तत्रैकजीववादिनोमते भक्तेः स्वरूपमाह स्वस्वरूपानुसन्धानमिति । अनाद्यविद्याकल्पितानात्मप्रपञ्चाद्विवेचितस्यस्वरूपस्यानुसन्धानं चिन्तनं तत्परत्वं यत्सा भक्तिरिति कथ्यते ॥ ३२ ॥

अनेकजीववादिनोमते भक्तेः स्वरूपमाह स्वात्मेति अपरे तत्वमस्यादिवाक्यतात्पर्यज्ञाः स्वात्मनोजीवपरात्मनोर्भागत्यागलक्षणलक्षणया लक्षितं यत् तत्त्वं शुद्धं ब्रह्म तस्यानुसंधानं चिंतनं मननिदिध्यासनापरपर्यायं यत् सा भक्तिरिति जगुः साधनान्तरप्राप्तौ सत्यामात्मज्ञानोपायमाह उक्तेति पूर्वोक्तसाधनचतुष्टयसंपन्नः पुरुषः आत्मनो यथार्थस्वरूपज्ञानेच्छावान् ॥ ३३ ॥ श्रोत्रियं ब्रह्मनिष्ठं गुरुं समधिगच्छेदित्याह उपसीदेदिति–प्राज्ञं आत्मज्ञं गुरुं उपगच्छेत् शिष्यभावेन प्राप्नुयात् यस्माद्गुरोर्बंधस्य संसारहेतोरज्ञानस्य विमोक्षणं निवृत्तिः

स्वात्मतत्वानुसंधानं भक्तिरित्यपरे जगुः ॥ उक्तसाधनसंपन्नस्तत्वजिज्ञासुरात्मनः ॥ ३३ ॥
उपसीदेद् गुरुं प्राज्ञं यस्माद्बन्धविमोक्षणम् ॥ श्रोत्रियोऽवृजिनोकामहतो यो ब्रह्मवित्तमः ॥ ३४ ॥
ब्रह्मण्युपरतः शान्तो निरिंधन इवानलः ॥ अहेतुकदयासिन्धुर्बंधुरानमतां सताम् ॥ ३५ ॥

स्यात्तमित्यर्थः । आचार्यस्य लक्षणमाह श्रोत्रियइति– श्रोत्रियोऽधीतवेदः अवृजिनः वृजिनं पापं तद्रहितः यथोक्तकारी शास्त्रोक्तकारीत्यर्थः । अकामहतः वीततृष्णः ब्रह्मवित्तमः सम्यग्ज्ञातात्मतत्त्वः ॥ ३४ ॥ ब्रह्मण्युपरतः बाह्यविषयांस्त्यक्त्वा ब्रह्मण्येवान्तःकरणवृत्तिस्थितिर्यस्य स तथोक्तः शान्तः अत एवात्मसुखतुष्टः निरिंधनो अनलइव यथा निरंधनो अप्रज्वलितकाष्ठरहितोग्निर्धूमादिरहितः शान्तो भवति तथाऽयमपि प्रत्युपकारमनपेक्ष्यैव दयासमुद्रः प्रणतानां सत्पुरुषाणां बंधुर्हितकारकः ॥ ३५ ॥

गुरुप्राप्तौ सत्यां कर्तव्यतामाह तमिति- तमेतादृशं गुरुं प्रह्वप्रश्रयसेवनैः प्रणामनम्रतासेवाभिर्भक्त्या समाराध्य प्रसन्नं कृत्वा तं प्रसन्नमनुप्राप्य तत्समीपं गत्वा आत्मनः ज्ञातुं योग्यमर्थं पृच्छेत् ॥ ३६ ॥ प्रश्नप्रकारमाह स्वामिन्निति- हेस्वामिन् हे नतलोकबंधो प्रणतजनहितकारिन् हे कारुण्यसिन्धो कृपासमुद्र ते तुभ्यं नमोस्तु भवाब्धौ संसारसमुद्रे पतितं मां स्वकीयकृपादृष्ट्या उद्धर बहिर्निष्का-

तमाराध्य गुरुं भक्त्या प्रह्वप्रश्रयसेवनैः ॥ प्रसन्नं तमनुप्राप्य पृच्छेज्ज्ञातव्यमात्मनः ॥ ३६ ॥
स्वामिन्नमस्ते नतलोकबंधो कारुण्यसिंधो पतितं भवाब्धौ ॥ मामुद्धरात्मीयकटाक्षदृष्ट्या
ऋज्व्याऽतिकारुण्यसुधाभिवृष्ट्या ॥ ३७ ॥ दुर्वारसंसारदवाग्नितप्तं दोधूयमानं दुरदृष्टवातैः ॥
भीतं प्रपन्नं परिपाहि मृत्योः शरण्यमन्यद्यदहं न जाने ॥ ३८ ॥

सय कथंभूतया दृष्ट्या ऋज्वया सरलया पुनः कथंभूतया अतिकारुण्यसुधाभिवृष्ट्या अतिकारुण्यमेव सुधा तस्याभिवृष्टिर्यस्याः सा तये-त्यर्थः ॥ ३७ ॥ कथंभूतं मां दुर्वारसंसारदवाग्नितप्तं दुर्वारः प्रकारांतरेणाऽनिवार्य्यः संसार एव दवाग्निः जन्ममरणादिदुःखरूपो हृत्तापको यो दवाग्निवत्समंतादावरणशीलस्तेन तप्तं दग्धं पुनश्च दुःखप्रदादृष्टघोरपवनैर्दोधूयमानमतिकंपितं पुनश्च मृत्योः सकाशात् भीतं त्वां

 प्रपन्नं मां परितः सर्वतः पाहि कुतः यत् यस्मात्कारणात् त्वदन्यं त्वत्तो भिन्नं शरण्यं शरणागतपालकं अहं न जानेऽतस्त्वमेव पाहीत्यर्थः 
॥ ३८ ॥ अत्र सदाचारं प्रमाणयति शान्ता इति— सन्तः सत्पुरुषाः शान्ता महान्तो महात्मानः वसन्तवल्लोकहितं चरन्तो निवसन्ति ।
 यथा वसंततुर्वृक्षाणां जीर्णपत्राणि सादयित्वा नवानि फलपुष्पाणि चोत्पाद्य सकललोकहितं करोति एवं सन्तोपि स्वयं भीमं भवार्णवं 
तीर्णाः अन्यानपि जनान् अहेतुना स्वकारुण्यस्वभावान्यहेतुमनपेक्ष्यैव सदुपदेशवातेन तेषां दुष्कर्मादि सादयित्वा विवेकवैराग्याद्यंकुर- 

शान्ता महान्तो निवसंति सन्तो वसन्तवल्लोकहितं चरन्तः ॥ तीर्णा स्वयं भीमभवार्णवं जना-
नहेतुनान्यानपि तारयन्तः ॥ ३९ ॥ अयं स्वभावः स्वत एव यत्परश्रमापनोदप्रवणं महात्म-
नाम् ॥ सुधांशुरेष स्वयमर्ककर्कशप्रभाभितप्तामवति क्षितिं किल ॥ ४० ॥

मुत्पाद्य महावाक्योपदेशाविर्भूतज्ञानसाक्षात्कारपुष्पफलोपकारेण नौकास्थानापन्नेनाधिकारिणः संसारसमुद्रात्तारयन्तो निवसन्तीत्यर्थः
॥ ३९ ॥ अत्र दृष्टान्तमाह अयमिति— महात्मनां यत्परश्रमापनोदप्रवणं परेषां दुःखनिवृत्तौ तत्परत्वमयं तेषां स्वतः एव स्वभावः कथं 
यथा एष सुधांशुश्चन्द्रमाः स्वयमेव किल निश्चयेनार्कस्य सूर्यस्य कर्कशाभिस्तीव्राभिः प्रभाभिः किरणैरभितप्तां क्षितिं पृथ्वीं अवति

स्वशीतलकिरणै रक्षति तथेत्यर्थः ॥ ४० ॥ मया तव हितं किंकरणीयमिति गुरुणोक्तः शिष्य आह ब्रह्मेति– एवं पूर्वोक्तप्रकारेण भवतापदावदहनज्वालाभिःसंतप्तं एनं पूर्वोक्तं मां वाक्यामृतैः सेचय कीदृशैः पूतैरीश्वराराधनादिभिर्युतैः पूतैरिति पाठे पवित्रैरित्यर्थः पुनः सुशीतैः हृद्दाहनिवर्तकैः पुनर्युष्मद्वाक्कलशोज्झितैर्भवदीयवाक्कलशान्निःसृतैः पुनः श्रुतिसुखैः श्रोत्रसुखदैः पुनः ब्रह्मानंद एव रसस्तस्यानुभूतिरनुभवस्तेन कलितैर्युतैः पूर्णैरित्यर्थः । हेप्रभो ये पुरुषा भवदीक्षणक्षणगतेर्भवद्दृष्टेः क्षणमात्रगमनस्य पात्रीकृता आश्रयीभूताः भवद्भिः स्वी-

ब्रह्मानन्दरसानुभूतिकलितैः पूतैः सुशीतैर्युतैर्युष्मद्वाक्कलशोज्झितैः श्रुतिसुखैर्वाक्यामृतैः सेचय ॥ संतप्तं भवतापदावदहनज्वालाभिरेनं प्रभो धन्यास्ते भवदीक्षणक्षणगतेः पात्रीकृताः स्वीकृताः ॥ ४१ ॥ कथं तरेयं भवसिन्धुमेतं का वा गतिर्मे कतमोस्त्युपायः ॥ जाने न किंचित्कृपया व मां प्रभो संसारदुःखक्षतिमातनुष्व ॥ ४२ ॥

कृताः स्वीयत्वेन गृहीतास्ते धन्याः कृतार्था इत्यर्थः ॥ ४१ ॥ स्वाभिप्रायं वदति कथमिति– हे प्रभो एतं भवसिन्धुं संसारसमुद्रं कथं तरेयम् तरिष्यामीत्यर्थः । मे मम का गतिः क आश्रय इत्यर्थः । संसारसमुद्रतरणस्य कतम उपायोस्ति अहं तु त्रयाणां मध्ये किंचिदपि न जाने अतो मां कृपया अव पालय । पालनमेवाह संसारदुःखस्य क्षतिं विनाशं आतनुष्व विस्तारय कुर्वित्यर्थः ॥ ४२ ॥

एवं शिष्येण प्रार्थितो गुरुरेवं कुर्यादित्याह तथेति-तथोक्तप्रकारेण वदन्तं संसारदावानलतापतप्तं स्वशरणमागतं शिष्यं कारुण्यरसार्द्रदृष्ट्या कृपा
रसस्निग्धया दृष्ट्या निरीक्ष्य महात्मा गुरुः सहसा शीघ्रमभीतिमभयं दद्यादित्यर्थः ॥ ४३ ॥ अभयदानमेवाह विद्वानिति- स विद्वान् गुरु- अ०
॥ ८ ॥ स्तस्मै शिष्याय उपसत्तिं शिष्यभावमीयुषे प्राप्ताय पुनः मुमुक्षवे पुनः साधु सम्यकृतया यथास्यात्तथा यथोक्तकारिणे यथार्थाज्ञाकारिणे

तथावदन्तं शरणागतं स्वं संसारदावानलतापतप्तम् ॥ निरीक्ष्य कारुण्यरसार्द्रदृष्ट्या दद्या- १
दभीतिं सहसा महात्मा ॥ ४३ ॥ विद्वान्स तस्मा उपसत्तिमीयुषे मुमुक्षवे साधु यथोक्तका-
रिणे ॥ प्रशान्तचित्ताय शमान्विताय तत्वोपदेशं कृपयैव कुर्यात् ॥ ४४ ॥ माभैष्ट विद्वंस्तव
नास्त्यपायः संसारसिंधोस्तरणेस्त्युपायः ॥ येनैव याता यतयोऽस्यपारं तमेव मार्गं तव निर्दि-
शामि ॥ ४५ ॥

पुनः शान्तचित्ताय विवेकवैराग्ययुक्ताय पुनः शमान्विताय केवलं कृपयैव तत्वोपदेशं कुर्यादित्यर्थः ॥ ४४ ॥ तत्वोपदेशप्रकारं क्रमेणाह ॥ ८ ॥
माभैष्टेति- हे विद्वन् माभैष्ट भयं मा कुरु तव अपायो विनाशः संसरणं नास्ति कुतः यतः संसारसिंधोस्तरणे उपायोस्ति येन मार्गेण

यतयः अस्य संसारस्य पारं यातास्तमेव मार्गं तव निर्दिशामि कथयामीत्यर्थः ॥ ४५ ॥ तमेवाह अस्तीति– हे शिष्य कश्चिन्महान् दृढः संसारभयनाशन उपायोऽस्ति तेनोपायेन भवांभोधिं संसारसमुद्रं तीर्त्वा परममानन्दमाप्स्यसि प्राप्तो भविष्यसीत्यर्थः ॥ ४६ ॥ तमेवाह वेदान्तेति– वेदान्तशास्त्रस्यार्थविचारेण तात्पर्यविचारेण उत्तमं संशयादिरहितं ज्ञानं यदा जायते तेन ज्ञानेनानु तदनंतरमेव संसार-

अस्त्युपायो महान्कश्चित्संसारभयनाशनः ॥ तेन तीर्त्वा भवांभोधिं परमानन्दमाप्स्यसि ॥४६॥
वेदांतार्थविचारेण जायते ज्ञानमुत्तमम् ॥ तेनात्यन्तिकसंसारदुःखनाशो भवत्यनु ॥ ४७ ॥
श्रद्धाभक्तिध्यानयोगान्मुमुक्षोर्मुक्तेर्हेतून्वक्ति साक्षाच्छ्रुतेर्गीः ॥ यो वा एतेष्वेव तिष्ठत्यमु-
ष्यमोक्षोऽविद्याकल्पिताद्देहबंधात् ॥ ४८ ॥

दुःखस्य नाशो भवति ॥ ४७ ॥ मुक्तिहेतूनाह श्रद्धेति– श्रुतेर्गीः वेदान्तवाक्यं तस्मादेवंविच्छान्तो दान्त इत्यादिः । श्रद्धाभक्तिध्यानयोगान् श्रद्धाशब्देन साधनचतुष्टयसंपत्तिर्लक्ष्यते भक्तिशब्देन तत्परता श्रवणमनने लक्ष्येते ध्यानशब्देन निदिध्यासनसमाधी लक्ष्येते एतान् त्रीन् योगान्मुक्तेर्हेतून् वक्ति साक्षात्प्रत्यक्षतया यः पुरुषः एतेषु योगेषु तिष्ठति तस्याविद्याकल्पिताद्देहबंधान्मोक्षो भवतीत्यर्थः ॥ ४८ ॥

संसृतेः कारणमाह अज्ञानेति– हे शिष्य त्वं स्वरूपतः परमात्मैव तथा सत एव तवाज्ञानसंबंधात् स्वस्वरूपाज्ञानात् अनात्मदेहाद्यात्मबुद्धिरूपाध्यासकृतो बंधः ततस्तस्मादध्यासकृताद्बंधात्संसृतिर्जन्ममरणादिसंसारः तयोरात्मानात्मनोर्यो विवेकः भिन्नतया ज्ञानं तस्मादुत्पन्नो यो बोध आत्मज्ञानं स एवाग्निः अज्ञानकार्यमहंकारादिसमूलं अज्ञानसहितं दहेत् निवारयेदित्यर्थः ॥ ४९ ॥ संप्राप्यातुलपूर्वपुण्यवशतो विप्रत्ववित्त्वेविवेकासंसक्तिशमादिसाधनयुतोऽभिज्ञं सुशान्तं गुरुम् ॥ संगम्यानतिपूर्वकं स्तुतिहतेर्हेतु प्रपृच्छेच्छनैरित्युक्तं हि

अज्ञानयोगात्परमात्मनस्तव ह्यनात्मबंधस्तत एव संसृतिः ॥ तयोर्विवेकोदितबोधवह्निरज्ञानकार्यं प्रदहेत् समूलम् ॥ ४९ ॥ शिष्य उवाच ॥ कृपया श्रूयतां स्वामिन् प्रश्नोयं क्रियते मया ॥ यदुत्तरमहं श्रुत्वा कृतार्थः स्यां भवन्मुखात् ॥ ५० ॥

विवेकमस्तकमणावध्यायआद्ये स्फुटम् ॥ १ ॥ इति श्रीजगाधरीनगरस्थसारस्वतवंशावतंसश्रीमन्मिश्रहरिधनपुरोहितात्मजवेदान्तनिष्ठपण्डितहरिनामदत्तविरचितायां विवेकचूडामणिटीकायां सुबोधिन्यां शुभेच्छाभूमिनिरुपणोनाम प्रथमोऽध्यायः ॥ १ ॥ शिष्यः प्रश्नंकरोति कृपयेति हे स्वामिन् यः प्रश्नो मया क्रियते स कृपया श्रूयतां यस्य प्रश्नस्योत्तरमहं भवन्मुखाच्छ्रुत्वा कृतार्थो भविष्यामि ॥ ५० ॥

अथशिष्यप्रश्नाः क इत्यादिना— बंधस्य किं स्वरूपं, अयं बंधो जीवस्य कथं प्राप्तः, अस्य स्थितेः कारणं किं, अस्य बंधस्य कथं विमोक्षः, कथं निवृत्तिः योसावनात्मा उक्तः स कः, तथा स्वस्यपरमः परमार्थभूत आत्मा आत्मस्वरूपं किम, तयोरात्मानात्मनोर्विवेकः पृथक्तया ज्ञानं कथं भवति, एतदुच्यतामित्यन्वयः ॥५१॥ गुरुरुवाच हे शिष्य त्वं धन्योसि सुश्लाघ्योसि कृतकृत्योसि कृतार्थोसि त्वया आत्मनःकुलं पवित्रीकृतम्। तत्र

को नाम बंधः कथमेष आगतः कथं प्रतिष्ठास्य कथं विमोक्षः ॥ कोसावनात्मा परमः क
आत्मा तयोर्विवेकः कथमेतदुच्यताम् ॥ ५१ ॥ श्रीगुरुरुवाच ॥ धन्योसि कृतकृत्योसि
पावितं ते कुलं त्वया ॥ यदविद्याबंधमुक्त्या ब्रह्मीभवितुमिच्छसि ॥५२॥ ऋणमोचनकर्तारः
पितुः सन्ति सुतादयः ॥ बंधमोचनकर्त्तातु स्वस्मादन्यो न कश्चन ॥ ५३ ॥

हेतुमाह यस्मात्कारणात्त्वं अविद्याजनितबंधमुक्त्या बंधनिवृत्या ब्रह्मीभवितुमिच्छसि ॥५२॥ बंधनिवृत्तौ तु स्वेनैव जीवतैव यत्नः कर्तव्य इत्याह ऋणेति— पितुः ऋणादिमोचनकर्तारः सुतादयः सन्ति अविद्याबंधनिवृत्तिकर्ता तु स्वस्मादन्यः कश्चन न सभवति ज्ञानादृते

 मोक्षासंभवात् तस्य च ज्ञानस्यान्तःकरणधर्मत्वेन स्वेनैव साध्यत्वादितिभावः ॥ ५३ ॥ अत्र दृष्टान्तमाह मस्तकेति- यथा मस्तकन्यस्त- 
भारादेर्दुःखमन्यैः पुरुषैः स्वहस्तादिना ग्रहणेन निवार्यते तथा क्षुधादिकृतं दुःखं स्वेन विना अन्येन केनचित् स्वमुखेनान्नभक्षणादिना न
 निवार्यते किन्तु तेन क्षुधितेन पुरुषेणैव स्वमुखेनान्नभक्षणादिना स्वप्रयत्नेनैव निवार्यते तथेत्यर्थः ॥ ५४ ॥ दृष्टान्तान्तरमाह पथ्यमिति- येन 

मस्तकन्यस्तभारादेर्दुःखमन्यैर्निवार्यते ॥ क्षुधादिकृतदुःखं तु विनास्वेन न केनचित् ॥ ५४ ॥
पथ्यमौषधसेवा च क्रियते येन रोगिणा ॥ आरोग्यसिद्धिर्दृष्टास्य नान्यानुष्ठितकर्मणा ॥ ५५ ॥
वस्तुस्वरूपं स्फुटबोधचक्षुषा स्वेनैव वेद्यं न तु पण्डितेन ॥ चंद्रस्वरूपं निजचक्षुषैव ज्ञातव्यमन्यैरवगम्यतेकिम् ॥ ५६ ॥

रोगिणा पथ्यमौषधसेवा च क्रियते अस्यैव पुरुषस्यारोग्यसिद्धिर्दृष्टा रोगिभिन्नस्यान्यपुरुषस्य पथ्यौषधसेवनादिना रोगिण आरोग्यसिद्धिर्न दृष्टेतिभावः ॥ ५५ ॥ दृष्टान्तसिद्धमर्थं दार्ष्टांतिके योजयति वस्त्विति- एवं वस्तुस्वरूपं साक्षाज्ज्ञानदृष्ट्या स्वेनैव मुमुक्षुणैव वेद्यम् । 
न तु पण्डितेन । उपदेष्ट्रा गुरुणा विदितं स्वप्रयत्नं विना स्वस्य विदितं भवति यथा द्वितीयादौ चन्द्रदर्शने चन्द्रस्वरूपं निजचक्षुषैव ज्ञा-

तव्यमस्ति अन्यैः पुरुषांतरचक्षुर्भिः किमवगम्यते किंतु नावगम्यते ॥ ५६ ॥ अविद्येति- अविद्याकामकर्मादिपाशैः कृतं बंधं विमोचितुं दूरीकर्तुं आत्मानं स्वप्रयत्नं विना कल्पकोटिशतैरपि कः शक्नुयात् न कोपीत्यन्वयः ॥ ५७ ॥ ब्रह्मात्मैकत्वबोधं विना मोक्षो न भवतीत्याह न योगेनेति- ब्रह्मात्मैकत्वबोधेन मोक्षः सिद्ध्यति अन्यथा बोधं विना योगेनाष्टांगेन सांख्येन तत्वविचारेण कर्मणा अग्निहोत्रादिना

अविद्याकामकर्मादि पाशबंधं विमोचितुम् ॥ कः शक्नुयाद्विनात्मानं कल्पकोटिशतैरपि ॥ ५७ ॥
न योगेन न सांख्येन कर्मणा नो न विद्यया ॥ ब्रह्मात्मैकत्वबोधेन मोक्षः सिद्ध्यति नान्यथा ॥ ५८ ॥
वीणाया रूपसौंदर्यं तंत्रिवादनसौष्ठवम् ॥ प्रजारंजनमात्रं तन्न साम्राज्याय कल्पते ॥ ५९ ॥
वाग्वैखरीशब्दझरी शास्त्रव्याख्यानकौशलम् ॥ वैदुष्यं विदुषां तद्वद् भुक्तये न तु मुक्तये ॥ ६० ॥

विद्यया वहुशास्त्राध्ययनेन वा मोक्षो न सिद्ध्यति ॥ ५८ ॥ अन्यैश्चातुर्य्यकारणैरपि मोक्षो न भवतीत्याह वीणेति- यद्वीणाया रूपसौंदर्यं यच्च तंत्रीनाम्न्या वीणायां वादने ध्वनौ सौष्ठवं चातुर्य्यं तत्सर्वं प्रजारंजनमात्रं लौकिकव्यवहारसाधकं साम्राज्याय मोक्षाय न कल्पते समर्थं नभवति ॥ ५९ ॥ अन्यदप्याह वागिति- या च वैखरी वाक् अनेकभाषाभिज्ञता या च शब्दझरीझटिति शब्दशास्त्रानुकूला

पदस्फूर्तिः यच्च शास्त्राणां व्याख्याने कौशलं अभिज्ञत्वं तद्वत् यद्वैदुष्यं काव्यालंकारादिस्फूर्तिमत्वं तत्सर्वं विदुषांभुक्तये भोगाय बहुधनप्राप्तये, मोक्षसाधनं तु न भवति ॥ ६० ॥ शास्त्राध्ययनं बोधांतमेवेत्याह अविज्ञातइति— परे तत्वे आत्मस्वरूपे अविज्ञाते न ज्ञाते सति शास्त्राध्ययनं नि-
॥ ११ ॥ ष्फलं निरर्थकं तथा परे तत्वे विज्ञातेऽपि शास्त्राध्ययनं निष्फलं कृताभीष्टकार्यं न पुनरपेक्षितमित्यर्थः ॥ ६१ ॥ विद्याफलं तत्वज्ञानमित्याह अ०

अविज्ञातेपरेतत्वेशास्त्राधीतिस्तुनिष्फला॥विज्ञातेपिपरेतत्वे शास्त्राधीतिस्तुनिष्फला ॥ ६१ ॥ २
शब्दजालंमहारण्यं चित्तभ्रमणकारणम् ॥ अतःप्रयत्नाज्ज्ञातव्यं तत्वज्ञैस्तत्वमात्मनः ॥ ६२ ॥
अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषधंविना ॥ किमुवेदैश्च शास्त्रैश्च किमुमंत्रैः किमौषधैः ॥ ६३ ॥
न गच्छति विनापानं व्याधिरौषधशब्दतः ॥ विनाऽपरोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते ॥ ६४ ॥

शब्देति—शब्दजालमनेकशास्त्रसमुदायः महारण्यं सघनवनवत् चित्तभ्रमणकारणं अतस्तत्वज्ञैः आत्मनः तत्वं स्वरूपं प्रयत्नतः श्रवणमननादिना ज्ञातव्यम्॥६२॥अज्ञाननिवृत्तिर्ज्ञानेनैवेत्याह अज्ञानसर्पेति—अज्ञानरूपसर्पेण दष्टस्य पुरुषस्य ब्रह्मज्ञानौषधं विना वेदैः शास्त्रैः मंत्रैः औषधैश्च किं ॥ ११ ॥
प्रयोजनं न किमपीत्यर्थः ॥ ६३ ॥ दृष्टान्तान्तरमाह न गच्छतीति—व्याधेरयं स्वभावः औषधपानं विना औषधशब्दश्रवणात्तन्नामोच्चार-

णात् रोगो न गच्छति न निवर्तते । एवमपरीक्षानुभवं विना केवलब्रह्मशब्दैर्न मुच्यते ॥ ६४ ॥ समाधिं विना न मुक्तिरित्याह अकृत्वेति– चक्षुषा मनसा वा दृश्यमानस्य सर्वप्रपंचस्य विलयं स्मृत्यभावं समाधिं अकृत्वा आत्मनस्तत्वं निष्क्रियं ब्रह्म अज्ञात्वा शुद्धोहं बुद्धोह- मित्यादि बाह्यशब्दैर्जिह्वामात्रोच्चारितैः उच्चारणमात्रफलैर्नृणां मुक्तिः कुतो भवति न कुतोपीत्यर्थः ॥ ६५ ॥ अत्रदृष्टांतमाह अकृत्वेति–

अकृत्वा दृश्यविलयमज्ञात्वा तत्वमात्मनः॥बाह्यशब्दैः कुतो मुक्तिरुक्तिमात्रफलैर्नृणाम् ॥ ६५ ॥

अकृत्वा शत्रुसंहारमगत्वाऽखिलभूश्रियम् ॥ राजाहमिति शब्दान्नो राजाभवितु मर्हति ॥ ६६ ॥

आप्तोक्तिं खननं तथोपरिशिलाद्युत्कर्षणंस्वीकृतिम् ॥ निःक्षेपं समपेक्षते नहि बहिः शब्दैस्तु निर्गच्छति ॥ तद्वद्ब्रह्मविदोपदेशमननध्यानादिभिर्लभ्यते मायाकार्यतिरोहितं स्वममलं तत्वं न दुर्युक्तिभिः ॥ ६७ ॥

राजपदावरोधकशत्रूणां संहारं विनाशं निवृत्तिं अकृत्वा अखिलां सर्वां भूश्रियं राजलक्ष्मीं कोशबलादिकं अगत्वा अप्राप्य केवलं राजा- हमिति कथनात् राजा भवितुं नार्हति न योग्योभवति कश्चिदपि ॥ ६६ ॥ अत्रैव दृष्टान्तांन्तरमाह आप्तेति– यथा निक्षेपो भूम्यधो नि- क्षिप्तं धनं बहिः शब्दैः बाह्यदेशे स्थित्वा हे धन निर्गच्छ इति बहिः शब्दैर्न निर्गच्छति न प्रकटितं भवति । कथं तर्हि निर्गच्छति

आप्तोक्त्यादिकमपेक्षते प्रथमत आप्तोक्तिं अत्र धनमस्तीति सत्यवक्तुर्वचनमपेक्षते, तदनन्तरं तत्रैव खननं ततस्तदुपरि विन्यस्तशिलाद्युत्कर्षणम् शिलाद्युत्थापनं ततः स्वीकृतिं ग्रहणं अपेक्षते तद्वत् तथा अमलं निर्मलं स्वं तत्वं आत्मस्वरूपं मायाकार्यतिरोहितं अहंकाराद्यावृत्तं ब्रह्मविदुपदेशश्रवणमननध्यानादिभिर्लभ्यते नदुर्युक्तिभिः असंभावितव्यभिचरितयुक्तिभिर्न लभ्यत इत्यर्थः ॥ ६७ ॥ मोक्षार्थं स्वयं यत्नः कर्तव्य इत्याह तस्मादिति- यस्मात्साक्षात्कारं विना मुक्तिर्न लभ्यते तस्मात्सर्वप्रयत्नेन भवबन्धविमुक्तये स्वैरेव स्वप्रयत्नसाध्यै-

तस्मात्सर्वप्रयत्नेन भवबंधविमुक्तये ॥ स्वैरेव यत्नः कर्तव्यो रोगादाविव पण्डितैः ॥ ६८ ॥

यस्त्वयाद्य कृतः प्रश्नो वरीयाञ्छास्त्रविन्मतः ॥ सूत्रप्रायो निगूढार्थो ज्ञातव्यश्च मुमुक्षुभिः ॥ ७० ॥

शृणुष्वावहितो विद्वन्यन्मया समुदीर्यते ॥ तदेतच्छ्रवणात्सद्यो भवबंधाद्विमोक्ष्यसे ॥ ७० ॥

रेव साधनैर्यत्न उपायः कर्तव्यः पण्डितैः यथा रोगादौ स्वैः प्रयत्नैः औषधपानादिरूपैरोगापगमस्तथेत्यर्थः ॥ ६८ ॥ शिष्यबुद्धिं स्तौति यस्त्वेति- हे शिष्य अद्य यस्त्वया प्रश्नः कृतः स वरीयान् अतिश्रेष्ठः शास्त्रविदां संमतश्च सूत्रप्रायः स्वल्पाक्षरोपि बह्वर्थसूचकः । निगूढार्थः गूढाभिप्रायः । मुमुक्षुभिः प्रयत्नतो ज्ञातव्य इति ॥ ६९ ॥ विद्वांसं स्तौति शृण्विति- हे विद्वन् यन्मया उच्यते तत्सावधानतया शृणु म-

दुक्तोत्तरश्रवणात् सद्य एव संसारबंधाद्विमुक्तो भविष्यसि ॥ ७० ॥ उत्तरमेवाह मोक्षस्येति–अनित्यवस्तुष्वत्यन्तं वैराग्यं मोक्षस्य प्रथमो हेतुः निगद्यते कथ्यते तदनन्तरं शमोदमस्तितिक्षाप्रसक्ताखिलकर्मणां अवश्यकर्तव्यतया प्राप्तानां भृशमत्यन्तं न्यासस्त्यागश्च मोक्षहेतवः ॥ ७१ ॥ एवं प्राप्ताधिकारस्य श्रवणाद्याह ततः श्रुतिरिति– ततः साधनसंपत्यनन्तरं श्रुतिर्महावाक्यश्रवणं श्रवणानन्तरं श्रुतस्य मनन-

मोक्षस्य हेतुः प्रथमो निगद्यते वैराग्यमत्यन्तमनित्यवस्तुषु ॥ ततः शमश्चापि दमस्तिति-
क्षान्यासः प्रसक्ताखिलकर्मणां भृशम् ॥ ७१ ॥ ततः श्रुतिस्तन्मननं सतत्वध्यानं चिरं नित्यनि-
रन्तरं मुनेः ॥ ततोऽविकल्पं परमेत्यविद्वानिहैव निर्वाणसुखं समृच्छति ॥ ७२ ॥ यद्बोद्धव्यं
तवेदानीमात्मानात्मविवेचनम् ॥ तदुच्यते मया सम्यक् श्रुत्वात्मन्यवधारय ॥ ७३ ॥

मनुभवविषयीकरणम् । तत आत्मतत्वध्यानं निदिध्यासनम् चिरकालपर्यंतं मुनिना नित्यं निरन्तरं कार्यं ततः समाध्यवस्थायां विद्वान् निर्विकल्पं परं ब्रह्म एत्य प्राप्य इहैव विद्यमाने एव शरीरे निर्वाणसुखं मोक्षसुखं समृच्छति प्राप्नोतीत्यर्थः ॥७२॥ इदानीमुक्तमोक्षकारणीभूतवैराग्यस्य हेतुभूतं विवेकमाह यद्बोद्धव्यमिति– हे शिष्य इदानीं तव बोद्धव्यमवश्यं ज्ञातवयम् यदात्मानात्मविवेचनं तन्मयोच्यते तत्वं सम्यक्

श्रुत्वा आत्मनि चित्तेऽवधारय निश्चितं कुरु ॥ ७३ ॥ प्रथमं स्थूलशरीरविवेचनमाह मज्जेति– बुधैर्मोहास्पदमेतच्छरीरं स्थूलमितीर्यते कथ्यते इत्यग्रिमेण सम्बन्धः एतत् किम् एभिर्मज्जादिभिर्धातुभिरन्वितं संयुक्तं तथा पादादिभिरंगैः उपाङ्गैर्युक्तम् ॥ ७४ ॥ पुनः कीदृशम् अहं ममेति– प्रथितं प्रसिद्धं तत्राहं ब्राह्मणो गौर इति अहंकारास्पदं मम शिरो मम बाहू इति ममास्पदमित्यर्थः । मोहारुपदं मोहा-

मज्जास्थिमेदःपलरक्तचर्मत्वगाह्वयैर्धातुभिरेभिरन्वितम् ॥ पादोरुवक्षोभुजपृष्ठमस्तकैरङ्गै-
रुपाङ्गैरुपयुक्तमेतत् ॥ ७४ ॥ अहं ममेति प्रथितं शरीरं मोहास्पदं स्थूलमितीर्यते बुधैः ॥
नभो नभस्वद्दहनाम्बुभूमयः सूक्ष्माणि भूतानि भवन्ति तानि ॥ ७५ ॥ परस्परांशैर्मिलितानि भूत्वा
स्थूलानि च स्थूलशरीरहेतवः ॥ मात्रास्तदीया विषया भवन्ति शब्दादयः पञ्च सुखाय भोक्तुः ॥ ७६ ॥

धिष्ठानम् । स्थूलशरीरहेतूनाह नभ इति– आकाशं नभस्वान् वायुर्दहनोग्निरम्बु जलं भूमिः पृथिवी इमानि सूक्ष्मभूतानि भवंति ॥ ७५ ॥ तानि पंचीकरणरीत्या परस्परांशैर्मिलितानि स्थूलानि भूत्वा स्थूलशरीरहेतवो भवन्ति तदीया मात्राः पंचभूतानां गुणाः पंच शब्दादयो

भोक्तुर्जीवस्य सुखाय विषया भवन्ति ॥ ७६ ॥ तदभिमाने दोषमाह य इति– ये मूढा एषु विषयेषु सुदुर्मदेन वलवता रागरूपेण उरु
पाशेन विस्तीर्णपाशेन बद्धास्ते स्वकर्मदूतेन जवेन वेगेन नीताः सन्तः अधः स्थावरान्तं उच्चैरूद्र्ध्वं स्वर्गलोकान्तमायान्ति निर्यांति च
संसारएव भ्रमन्तीत्यर्थः ॥ ७७ ॥ यद्येकैकगुणबद्धो नश्यति किंपुनः पञ्चभिरित्याह शब्दादिभिरिति– कुरङ्गमातङ्गपतङ्गमीनभृङ्गाः पञ्चजी-
वाः स्वगुणेन शब्दादिना एकैकेन बद्धाः सन्तः शब्दादिभिः पंचभिर्विषयैरेव पंचत्वं मृत्युमापुः प्राप्ताः नरस्त्वेक एव पंचभिर्गुणैर्विषयै-

य एषु मूढा विषयेषु बद्धा रागोरुपाशेन सुदुर्मदेन ॥ आयान्ति निर्यान्त्यध उर्द्धमुच्चैः स्व-
कर्मदूतेन जवेन नीताः ॥ ७७ ॥ शब्दादिभिः पञ्चभिरेव पञ्च पञ्चत्वमापुः स्वगुणेन बद्धाः ॥
कुरंगमातङ्गपतङ्गमीनभृङ्गा नरः पञ्चभिरञ्चितः किम् ॥ ७८ ॥

रंचितो युक्तो मृत्युं प्राप्नुयादिति किं वक्तव्यं नाश्चर्यमित्यर्थः अत्रैवं प्रसिद्धिरस्ति कुरंगाणां मृगाणां बन्धनार्थं तद्बन्धका वीणाशब्दं कुर्वंति
तच्छब्दलुब्धा मृगा स्तत्समीपमागच्छन्ति ते तान् बध्नन्तीति मातंगानां हस्तिना बन्धनार्थं तद्बन्धकास्तज्जलपानमार्गे गर्त्तं कृत्वा तं
गर्तं सूक्ष्मकाष्ठमृत्तिकाभिराच्छाद्य तत्समीपे कृत्रिमहस्तिनीं शिक्षितांवावन्धति ततस्तद्दर्षिता हस्तिनो मार्गपरीक्ष्यगमनशीला अपि हस्ति-
नीरुपर्शलुब्धा अपरीक्ष्यैवमार्गं द्रुतं गच्छन्तो गर्तेपतन्ति ततस्तेतान् वन्धन्तीति पतङ्गाः पक्षवन्तः कीटाः पावकरूपलुब्धा अग्नौ पतन्तीति

प्रसिद्धमिति ॥ मीना मत्स्या मांसरसलुब्धा जले समांसं बडिशं गिलन्ति ततस्तेन बडिशेन सहैव बध्यन्त इति ॥ भृङ्गा भ्रमरा गन्धलुब्धा कमलेषु तिष्ठन्ति रात्रावपि न मुञ्चन्ति मुकुलितकमलेषु तत्रैव बन्धनमायान्तीति॥७८॥ विषयविषं सर्पविषादपि तीव्रं इत्याह दोषेणेति–विषयो दोषेण मारणानुकूलात्मस्वभावदोषेण कृष्णसर्पादपि तीव्रः दुस्सहः तीव्रतामाह विषं च भोक्तारमेव हन्ति न तु द्रष्टारमयं विषयस्तु चक्षुषापि द्रष्टारं हन्ति ॥७९॥ विषयत्यागफलमाह विषयेति। सुदुस्त्यजात् दुःखेनापि त्यक्तुमशक्यात् विषयाशारूपान्महापाशात् यो मुक्तः स एव पुरुषो

दोषेण तीव्रो विषयः कृष्णसर्पविषादपि ॥ विषं निहंति भोक्तारं द्रष्टारं चक्षुषाप्ययम् ॥ ७९ ॥
विषयाशामहापाशाद्यो विमुक्तः सुदुस्त्यजात्॥ स एव कल्पते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि ८०
आपातवैराग्यवतो मुमुक्षून्भवाब्धिपारं प्रतियातुमुद्यतान् ॥ आशाग्रहो मज्जयतेऽन्तराले
निगृह्य कण्ठे विनिवर्त्य वेगात् ॥ ८१ ॥

मुक्त्यै मोक्षाय कल्पते समर्थो भवति । अन्यस्तु आशापाशबद्धः पुरुषः षट्शास्त्रवेत्तापि मोक्षाय समर्थो न भवतीत्यर्थः ॥ ८० ॥ दृढवैराग्यसंपादनायाऽपक्ववैराग्यं निंदति आपात इति– अथवा मुमुक्षुभिराशात्यागेऽत्यंतप्रयत्नो विधेय इत्यभिप्रेत्याऽऽशाप्राबल्यं दर्शयति आपातइति संसारसमुद्रपारं प्राप्तुमुद्यमवतो यथा श्रुता दृढवैराग्यवतो मुमुक्षून् अयमाशारूपोग्रहः ग्राहो वेगात्कण्ठे निगृह्य गृहीत्वा

गमनाद्विनिवर्त्य निरोधं कृत्वा अन्तराले मध्ये एव मज्जयते संसारे एव प्रवर्तयतीत्यर्थः ॥ ८१ ॥ वैराग्यस्तुतिमाह विषयाख्येति— येन दृढवैराग्यवता पुरुषेण विषयनामाग्रहो ग्राहो दृढवैराग्यखड्गेन हतो विनाशितः स विषयाशाकृतप्रतिबंधवर्जितो भवांभोधेः संसारसमुद्रस्य पारं गच्छति मोक्षं प्राप्नोतीत्यर्थः ॥८२॥ उपदेशस्तुतिमाह विषयेति विषमाः कठिना दुःखदा ये विषयमार्गा विषयेषु प्रवृत्तिरूपास्तैर्मार्गैः

विषयाख्यग्रहो येन सुविरक्त्यसिना हतः ॥ स गच्छति भवांभोधेः पारं प्रत्यूहवर्जितः ॥ ८२ ॥

विषमविषयमार्गैर्गच्छतोऽनच्छबुद्धेः प्रतिपदमभियातोमृत्युरप्येष विद्धि ॥ हितसुजनगुरूक्त्या गच्छतः स्वस्य युक्त्या प्रभवति फलसिद्धिः सत्यमित्येव विद्धि ॥ ८३ ॥ मोक्षस्य कांक्षा यदि वै तवास्ति त्यजातिदूराद्विषयान्विषं यथा ॥ पीयूषवत्तोषदयाक्षमार्जवप्रशान्तिदान्तीर्भज नित्यमादरात् ॥ ८४ ॥

गच्छतो विषयेषु प्रवृत्तस्याशुद्धबुद्धेः पुरुषस्य प्रतिपदं पदेपदे सर्वकर्मसु एषमृत्युर्दुखमपि अभियातः सर्वतः प्राप्तएवेति विद्धि जानीहि हितकारिणां सज्जनानां गुरूणां च उक्त्या उपदेशेन गच्छतः कर्म कुर्वतः स्वस्य युक्त्या च विचारपूर्वं वर्तमानस्य फलसिद्धिः प्रकर्षेण भवतीति सत्यमेव विद्धि ॥ ८३ ॥ हितोपदेशमाह मोक्षेति हे शिष्य यदि तव मोक्षस्य कांक्षास्ति तदा दूराद्विषयान् त्यज कथं यथा विषं त्यजंति जिजी-

विषवः तथा तोषदयाक्षमार्जवशान्तिदांतीरिमाः षट् नित्यमादरात् पीयूषवत् अमृतवत्सेवय ॥ ८४ ॥ अविद्यानिवृत्तौ यत्नं त्यक्त्वादेहास-क्तस्य दोषमाह अनुक्षणमिति यदनाद्यविद्याकृतस्य बंधस्य मोक्षणं तत् अनुक्षणम् क्षणेक्षणे सर्वदा कृत्यं कर्तुं योग्यं तत्परिहृत्य त्यक्त्वा योयं परार्थो देहः अमुष्यदेहस्य पोषणे लालने यः सज्जते स अनेनपोषणेन स्वमात्मानं हंति उपेक्षितं हतमिव त्यजतीत्यर्थः ॥ ८५ ॥ देहपोषकस्या-त्मज्ञानं न भवतीत्याह शरीरेति– यः पुरुषः शरीरपोषणार्थीसन् आत्मानं साक्षिणं शुद्धं द्रष्टुमिच्छति सः ग्राहं नक्रं नरभक्षकं काष्ठबुद्ध्या तर-

अनुक्षणं यत्परिहृत्य कृत्यमनाद्यविद्याकृतबंधमोक्षणम् ॥ देहः परार्थोयममुष्यपोषणे यः सज्जते स स्वमनेनहन्ति ॥ ८५ ॥ शरीरपोषणार्थीसन् य आत्मानं दिदृक्षति ॥ ग्राहं दारुधिया धृत्वा नदीं तर्त्तुं सगच्छति ॥ ८६ ॥ मोह एव महामृत्युर्मुमुक्षोर्वपुरादिषु ॥ मोहो विनि-र्जितो येन स मुक्तिपदमर्हति ॥ ८७ ॥

णार्थं धृत्वा नदीं तर्तुमिच्छति यथा काष्ठबुद्ध्या धृतो ग्राहः पुरुषं कण्ठे गृहीत्वा मज्जयति भक्षतिच एवं संसारसागरतारकमात्मानं द्रष्टुमिच्छन् देहपोषणे सक्तो देहानुगं संसारमेवानुगच्छति ॥ ८६ ॥ मोहत्यागफलमाह मोह इति– मोक्षेच्छावतः वपुरादिषु यो मोहः शरीराद्यभिनिवे-शेनात्मवैचित्यं स एव महामृत्युरात्मविनाशकः स मोहो येन धीरेण विनिर्जितः स पुरुषः मुक्तिपदमर्हति मुक्तिपदमारोढुं योग्यो भव-

तीत्यर्थः ॥ ८७ ॥ मोहत्यागः कार्य इत्याह मोहमिति– तस्माद्देहदारसुतादिषु मोहमासक्तिं जहि निवारय यं मोहं जित्वा निवार्य्य मुनयस्तत् प्रसिद्धं विष्णोर्व्यापकस्य परमात्मनः परमं शुद्धं पदं स्वरूपं यांति प्राप्नुवन्तीत्यर्थः ॥ ८८ ॥ स्थूलदेहनिंदां वैराग्यार्थमाह त्वगिति– त्वगादिनिर्मितं मूत्रपुरीषाभ्यां पूर्णं स्थूलं वपुः शरीरं निंद्यमेव ॥ ८९ ॥ स्थूलशरीरमाह पंचीति– पंचीकृतेभ्यः स्थूलेभ्यो भू-

मोहं जहि महामृत्युं देहदारसुतादिषु॥ यं जित्वा मुनयो यान्ति तद्विष्णोः परमं पदम् ॥ ८८॥
त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंकुलम् ॥ पूर्णं मूत्रपुरीषाभ्यां स्थूलं निंद्यमिदं वपुः ॥ ८९॥
पञ्चीकृतेभ्यो भूतेभ्यः स्थूलेभ्यः पूर्वकर्मणा ॥ समुत्पन्नमिदं स्थूलं भोगायतनमात्मनः ॥ अवस्थाजागरस्तस्य स्थूलार्थानुभवो यतः ॥ ९० ॥ बाह्येंद्रियैः स्थूलपदार्थसेवां स्रक्चंदनस्त्र्यादिविचित्ररूपाम्॥ करोति जीवः स्वयमेतदात्मना तस्मात्प्रशस्तिर्वपुषोस्य जागरे ॥ ९१ ॥

तेभ्यः पूर्वकर्मणा समुत्पन्नमिदं स्थूलं शरीरमात्मनो भोग्यभोगस्थानं अवस्था तु तस्य जागर एव यतोऽस्मिन् शरीरे स्थूलार्थानुभवः ॥९०॥ जागरे स्थूलस्यैव मुख्यत्वमित्याह बाह्येति– यतः कारणाज्जीवः स्रक् चंदनस्त्र्यादिविचित्ररूपां स्थूलपदार्थसेवां बाह्येन्द्रियैरेतदात्मना

स्थूलशरीरात्मना करोति तस्मादस्य स्थूलशरीरस्य जागरे मुख्यत्वम् ॥ ९१ ॥ अस्यात्मनः पृथक्त्वमाह सर्व इति– पुरुषस्य सर्वोऽपि बाह्यसंसारः स्त्रीपुत्रादिरूपो यदाश्रयः यदभिमानकृत इदं स्थूलदेहं गृहमेधिनो गृहस्थस्य गृहवत् आत्मनः पृथक् विद्धि जानीहीत्यर्थः ॥९२॥ स्थूलशरीरधर्मानाह स्थूलेति– संभवो जन्म जरामरणे प्रसिद्धे इमे धर्माः स्थूलशरीरस्यैव तथा स्थौल्यादयोऽपि शिशुताद्यवस्था वा-

सर्वोऽपिबाह्यसंसारः पुरुषस्य यदाश्रयः ॥ विद्धि देहमिदं स्थूलं गृहवद् गृहमेधिनः ॥ ९२ ॥
स्थूलस्य संभवजरामरणानि धर्माः स्थौल्यादयो बहुविधाः शिशुताद्यवस्थाः ॥ वर्णाश्रमादिनियमा बहुधाऽमयाः स्युः पूजावमानबहुमानमुखाविशेषाः ॥ ९३ ॥ बुद्धीन्द्रियाणि श्रवणं त्वगक्षिघ्राणं च जिह्वा विषयावबोधनात् ॥ वाक्पाणि पादागुदमप्युपस्थः कर्मेन्द्रियाणि प्रवणेन कर्मसु ॥ ९४ ॥

ल्यादयोऽपि बहुधा स्थूलस्यैव वर्णाश्रमादिनियमा बहुप्रकारा रोगास्तथा पूजावमानबहुमानमुखा अपि विशेषा धर्माः स्थूलस्यैव सन्तीति ॥ ९३ ॥ सूक्ष्मशरीरनिरूपणार्थं ज्ञानेंद्रियादितत्त्वान्याह बुद्धीति– श्रवणं त्वक् अक्षि घ्राणं जिह्वा च विषयावबोधनात् पंच ज्ञाने- 

न्द्रियाणि । वाक्पाणी पादौ गुदं उपस्थ इमानि कर्मेन्द्रियाणि ॥९४॥ अंतःकरणमाह निगद्यत इति- मनोबुद्धिरहंकारश्चित्तमिति स्ववृत्ति-
भिश्चतुर्विधमन्तःकरणं निगद्यते संकल्पविकल्पनादिभिरंतःकरणं मनो निगद्यते । तथा पदार्थेषु निश्चयात्मिकवृत्त्यांतःकरणं बुद्धिर्निग-
द्यते ॥ ९५ ॥ अत्र पदार्थेषु अहमित्यभिमानादन्तःकरणमहंकृतिरहंकारो निगद्यते । स्वार्थानुसंधानं स्वार्थचिंतनं स्वपदार्थस्यात्मनश्चि-

निगद्यतेन्तःकरणं मनोधीरहंकृतिश्चित्तमिति स्ववृत्तिभिः ॥ मनस्तु संकल्पविकल्पनादिभि-
र्बुद्धिः पदार्थाध्यवसायधर्मतः ॥ ९५ ॥ अत्राभिमानादहमित्यहंकृतिः स्वार्थानुसंधानगुणेन
चित्तम् ॥ ९६ ॥ प्राणापानव्यानोदानसमाना भवत्यसौ प्राणः ॥ स्वयमेव वृत्तिभेदाद्विकृति-
भेदात्सुवर्णसलिलादिवत् ॥ ९७ ॥ हृदि प्राणो गुदे पानः समानो नाभिसंस्थितः ॥ उदानः कंठदेशस्थो-
व्यानः सर्वशरीरगः ॥

न्तनं तेन गुणेनान्तःकरणं चित्तमिति निगद्यते ॥ ९६ ॥ प्राणभेदानाह प्राणेति- असौ प्राणः एकोपि स्वयमेव वृत्तिभेदकृतभेदात्
प्राणापानादिरूपो भवति कथं सुवर्णसलिलादिवत् यथा एकं सुवर्णं भूषणाद्याकृतिभेदेनानेकविधं एकं सलिलं नानौषधिसंबंधादर्काख्यया
फेनबुद्बुदादिरूपभेदेन वानेकविधं भवति। आदिशब्देन मृदपि घटादिव्यक्तिभेदेनानेकविधा भवति तद्वत् अस्यापि भेदाद्विकृतिर्भवति ॥ ९७ ॥

विं०चू० अथ पुर्यष्टकमाह वागादीति- वागादि पंच १ श्रवणादि पंच २ प्राणादि पंच ३ आकाशादि पंच ४ बुद्ध्यादि चतुष्टयं ५ अविद्या च सटी०
कामश्च ७ कर्म च ८ इति ॥ ९८ ॥ सूक्ष्मशरीरमाह इदमिति- हे शिष्य त्वं शृणु किम् इदं वागादितत्त्वात्मकं सूक्ष्मसंज्ञितं शरीरं लिंग- अ०
॥ १७ ॥ शरीरम् । इदं त्वपंचीकृतपंचमहाभूतोद्भवं वासनायुक्तमेतत्कर्मफलोत्पादकमिदं स्वस्वरूपाज्ञानतो हेतोरात्मन अनादिरुपाधिरस्ति ॥ ९९ ॥ २

वागादि पंच श्रवणादि पंच प्राणादिपंचाभ्रमुखानि पंच ॥ बुद्ध्याद्यविद्यापि च कामकर्मणी
पुर्यष्टकं सूक्ष्मशरीरमाहुः ॥ ९८ ॥ इदं शरीरं शृणु सूक्ष्मसंज्ञितं लिङ्गं त्वपंचीकृतभूतसंभवम् ॥
सवासनं कर्मफलानुभावकं स्वाज्ञानतोऽनादिरुपाधिरात्मनः ॥ ९९ ॥ स्वप्नो भवत्यस्य वि-
भक्त्यवस्था स्वमात्रशेषेण विभाति यत्र ॥ स्वप्ने तु बुद्धिः स्वयमेव जाग्रत्कालीननानावि-
धवासनाभिः ॥ १०० ॥

सूक्ष्मशरीरस्यावस्थामाह स्वप्न इति द्वाभ्यामिति- अस्य सूक्ष्मशरीरस्य विभक्त्यवस्थाविकारविशेषः स्वप्नो भवति यत्र स्वप्ने यमात्मा स्व- ॥ १७ ॥
मात्रावशेषेण विभाति प्रतीतं भवति स्वप्ने तु इयं बुद्धिः स्वयमेव बाह्यपदार्थहीनैव जाग्रत्कालीननानाविधवासनाभिर्युक्ता सती ॥ १०० ॥

कर्त्रादिभावं प्रतिपद्य प्राप्य राजते प्रकाशते यत्र स्वप्ने हि निश्चयेनायं जीवः स्वयमेव परमात्मा अशेषसाक्षी बुद्धिमात्रोपाधिको भाति प्रकाशते तत्कृतकर्मलेशैः बुद्धिकृतकर्मलेशैर्न युज्यते न युक्तो भवति यस्मात्कारणादयमात्मा असङ्गस्ततस्तस्मादेव कारणादुपाधिना बुद्धया कृतैः कर्मभिः किंचिदपि न लिप्यते न युज्यत इत्यर्थः ॥ १०१ ॥ अस्य पुंसः स्वरूपतश्चिदात्मन एव

कर्त्रादिभावं प्रतिपद्य राजते यत्र स्वयं भाति ह्ययं परात्मा ॥ धीमात्रकोपाधिरशेषसाक्षी
न लिप्यते तत्कृतकर्मलेशैः॥यस्मादसंगस्तत एव कर्मभिर्न लिप्यते किंचिदुपाधिना कृतैः॥१०१॥
सर्वव्यापृतिकरणं लिङ्गमिदं स्याच्चिदात्मनः पुंसः ॥ वास्यादिकमिव तक्ष्णस्तेनैवात्मा भव-
त्यसंगोयम् ॥ २ ॥ अंधत्वमंदत्वपटुत्वधर्माः सौगुण्यवैगुण्यवशाद्धि चक्षुषः ॥ बाधिर्यमूकत्व-
मुखास्तथैव श्रोत्रादिधर्मा न तु वेत्तुरात्मनः ॥ ३ ॥

सतः इदं लिङ्गशरीरं सर्वव्यापारसाधनमस्ति यथा तक्ष्णः काष्ठकर्मकर्तुर्वास्यादिकम् । वसोलेति प्रसिद्धम् शस्त्रादिकं । तेन हेतुना यमात्मा असंगो भवति ॥ १०२ ॥ ननु अन्धोहं बधिरोहमित्यादयो लिंगधर्मा आत्मनो दृश्यन्ते तेन विकारित्व-

मात्मन इत्यत आह अंधत्वमिति– अंधत्वं मंदत्वं स्वल्पदृष्टित्वं पटुत्वं निर्मलदृष्टित्वं बाधिर्यं बधिरत्वं मूकत्वमित्यादयो धर्माः सौगुण्यवैगुण्यवशात् चक्षुः श्रोत्रादेः साधनजातस्यैव न रूपादिवेत्तुरात्मनो धर्मा भवंति तस्य केवलं द्रष्टृत्वात् इति ॥ ३ ॥ तथा उच्छ्वासः प्राणस्य बहिर्निःसरणं निःश्वासः अंतर्गमनं प्रस्यन्दनं कफादेर्निःसरणं उत्क्रमणं देहत्याग इत्यादिकाः क्रियाः प्राणस्यैव कर्मा-



उच्छ्वासनिःश्वासविजृम्भणक्षुत्प्रस्यन्दनाद्युत्क्रमणादिकाः क्रियाः ॥ प्राणादिकर्माणि वदन्ति तज्ज्ञाः प्राणस्य धर्मावशनापिपासे ॥४॥ अन्तः करणमेतेषु चक्षुरादिषु वर्ष्मणि ॥ अहमित्यभिमानेन तिष्ठत्याभासतेजसा ॥ ५ ॥ अहंकारः स विज्ञेयः कर्ताभोक्ताभिमान्ययम् ॥ सत्वादिगुणयोगेन चावस्थात्रयमश्नुते ॥ ६ ॥

णीति तज्ज्ञाः प्राणादिस्वरूपभावज्ञा वदन्ति । तथा अशनापिपासे क्षुधातृष्णे अपि प्राणधर्मौ इति भावः ॥ ४ ॥ चक्षुरादिष्वन्तःकरणस्य स्थितिमाह अंतः करणेति– वर्ष्मणि शरीरे एतेषु चक्षुरादिषु अहमित्यभिमानेन युक्तमाभासतेजसा चिदाभासतेजसा भासितमन्तः करणमेव तिष्ठति ॥ ५ ॥ अंतः करणस्यैव कर्तृत्वादिकमाह अहमिति– तदेवान्तः करणं परिणतं सत् सोयमहंकारः सन्

कर्ता भोक्ता अभिमानीति सत्वादिगुणसंबंधेन अवस्थात्रयमश्नुते इत्यर्थः ॥ ६ ॥ विषयाणामानुकूल्ये सुखेन प्राप्तौ सुखी भवति विपर्यये प्रयासेन प्राप्तौ अप्राप्तौ वा दुःखीभवति इदं सुखं दुःखं च तस्याहंकारस्यैव धर्मः सदा आनन्दस्वरूपस्यात्मनो धर्मो न भवति ॥ ७ ॥ आत्मनः प्रियत्वे जनप्रसिद्धिं दर्शयति आत्मार्थत्वेनेति- विषयस्तु आत्मार्थत्वेन आत्मभोग्यत्वेनैव प्रियः स्वतस्तु प्रियो नास्ति यत आत्माहि सर्वेषां जीवानां स्वत एव प्रियतमः अत्यन्तप्रियो भवति ॥ ८ ॥ आत्मनः आनन्दरूपत्वे स्वानुभवं दर्शयति तत इति- यत

विषयाणामानुकूल्ये सुखीदुःखी विपर्यये ॥ सुखं दुःखं च तद्धर्मः सदानंदस्य नात्मनः ॥७॥
आत्मार्थत्वेन हि प्रेयान्विषयो न स्वतः प्रियः॥स्वतएव हि सर्वेषामात्मा प्रियतमो यतः ॥८॥
तत आत्मा सदानन्दो नास्य दुःखं कदाचन॥ यत्सुषुप्तौ निर्विषय आत्मानन्दोऽनुभूयते ॥९॥

एवं तत आत्मा सदा आनन्दः अस्य दुःखं कदाचिदपि नास्ति यस्मात्कारणात्सुषुप्तौ आत्मानंदो निर्विषयः अनुभूयते। अत्र प्रमाणानि चत्वारि प्रथमं प्रमाणम् श्रुतिः 'अस्यैवानन्दस्य सर्वाणि भूतानि मात्रामुपजीवन्ति' इति। द्वितीयं प्रमाणम् प्रत्यक्षमात्मानन्दानुभवः स्वप्नसुषुप्तिसमाधिषु ऐतिह्यं लोकप्रसिद्धिरिति। तृतीयम् प्रमाणं मैत्रेयीब्राह्मणे दर्शितम्। अनुमानं चतुर्थम् आत्मा परमानन्दरूपः पर-

॥ १९ ॥ प्रेमास्पदत्वात् यन्नैवं तन्नैवं यथा घट इति प्रमाणानि जाग्रति प्रत्यक्षेण वर्तंते इत्यर्थः ॥ ९ ॥ एतद्भ्रममूलभूतायाः मायायाः स्वरूपमाह
अव्यक्तेति- अव्यक्तनामवती परमेश्वरस्य शक्तिः परा अनाद्यविद्या त्रिगुणात्मिका माया विद्यते सा तु सुधिया पुरुषेणैव कार्येण जगता
उत्पद्यमानेनानुमेया यया इदं सर्वं जगत्प्रसूयते ॥ १० ॥ कुतः कार्यानुमेया इत्यत आह सन्नेति- सा माया सद्रूपा न, निरूपयितुमश-

अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिकापरा ॥ कार्यानुमेया सुधियैव माया
यया जगत्सर्वमिदं प्रसूयते ॥ १० ॥ सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभया-
त्मिका नो ॥ साङ्गाप्यनङ्गा ह्युभयात्मिका नो महाद्भुता निर्वचनीयरूपा ॥ ११ ॥
शुद्धाद्वयब्रह्मविबोधनाश्या सर्पभ्रमो रज्जुविवेकतो यथा ॥ रजस्तमः सत्वमिति प्रसिद्धा
गुणास्तदीयाः प्रथितैः स्वकार्यैः ॥ १२ ॥

क्यत्वात्। असद्रूपापि न, तत्कार्यदर्शनात, उभयात्मिकापि न, सदसतोर्विरोधात्। परमात्मनो भिन्नापि न, द्वैतस्यानिरूपणात्। अभिन्नापि
न, निर्विकारित्वश्रुतेः। उभयात्मिका न, विरोधात्। न च साङ्गा प्रत्यक्षत्वापत्तेः। न निरंगा साङ्गजगत्कारणत्वात्। नोभयात्मिका विरोधात् ॥ १९ ॥
कीदृशी तर्हि सा मायेत्यत आह महाद्भुता अघटमानघटनापटीयसी अनिर्वचनीयरूपैवेति ॥ ११ ॥ तन्निवृत्त्युपायमाह शुद्धेति- शुद्धा-

द्वितीयब्रह्मणः स्वरूपज्ञानेन नाश्या कथं यथा रज्जुस्वरूपज्ञानतः सर्पभ्रमो नाश्यस्तथा तदीया गुणाः प्रसिद्धैः स्वकार्यैः सुखदुःखमोहादिभिः सत्वं रजस्तम इति प्रसिद्धाः ॥१२॥ रजोगुणस्य धर्मानाह विक्षेपेति द्वाभ्याम्—रजसःसकाशात्क्रियात्मिकाविक्षेपशक्तिर्भवति यतो विक्षेपशक्तेः पुराणी चिरप्रवृत्ता विषयप्रवृत्तिर्विस्तृता विस्तारं प्राप्ता अस्या विक्षेपशक्तेरेव नित्यं रागादयो भवंति उत्पद्यन्ते ये च दुःखाद-

विक्षेपशक्ती रजसः क्रियात्मिका यतः प्रवृत्तिः प्रसृता पुराणी ॥ रागादयोऽस्याः प्रभवन्ति नित्यं दुःखादयो ये मनसो विकाराः ॥ १३ ॥ कामः क्रोधो लोभदंभाद्यसूयाऽहंकारेर्ष्या मत्सराद्यास्तु घोराः॥ धर्मा एते राजसाः पुम्प्रवृत्तिर्यस्मादेषा तद्रजो बन्धहेतुः॥१४॥ एषाऽऽवृतिर्नामतमोगुणस्य शक्तिर्यया वस्त्ववभासतेन्यथा ॥ सैषा निदानं पुरुषस्य संसृतेर्विक्षेपशक्तेः प्रवणस्य हेतुः ॥ १५ ॥

यो मनसो विकारास्तेपि विक्षेपशक्तेरेवोत्पद्यन्ते ॥ १३ ॥ एते कामक्रोधादयो घोरा दुःखदा ये धर्मास्तेपि राजसा एव यस्मादेषा बंधस्य हेतुः कारणभूता पुरुषस्य प्रवृत्तिस्तद्रज एव ॥ १४ ॥ तमोगुणधर्मानाह द्वाभ्याम् एषेति— या एषा आवृतिरावणं वस्तुस्वरूपाज्ञानं नाम

प्रसिद्धा शक्तिः सा तमोगुणस्य शक्तिर्यथावरणशक्त्या वस्तु अन्यथावभासते सा एषा पुरुषस्य संसृतेर्निदानं कारणं विक्षेपशक्तेः प्र- सटी०
प्रवणस्य प्रवृत्तेर्हेतुरेषा आवरणशक्तिरेव ॥ १५ ॥ पुरुषः प्रज्ञावानपि पण्डितोपि चतुरोपि अत्यन्तसूक्ष्मार्थद्रष्टापि तमोगुणेन व्यालीढः
ग्रस्तः सन् बहुधा सम्यग्बोधितोपि स्फुटं वस्तु न वेति प्रत्युत भ्रांत्यारोपितमेव देहगेहादिकं साधु कलयति सुखदं गणयति मन्यते इ- अ०

प्रज्ञावानपि पण्डितोपि चतुरोप्यत्यन्तसूक्ष्मात्मदृग्व्यालीढस्तमसा न वेत्ति बहुधा संबोधि- २
तोपि स्फुटम् ॥ भ्रान्त्यारोपितमेव साधुकलयत्यालम्बते तद्गुणान् हंतासौ प्रबला दुरंतत
मसः शक्तिर्महत्यावृतिः ॥ १६ ॥ अभावना वा विपरीतभावना संभावनाविप्रतिपत्तिरस्याः ॥
संसर्गयुक्तं न विमुञ्चति ध्रुवं विक्षेपशक्तिः क्षपयत्यजस्रम् ॥ १७ ॥

त्यर्थः। तद्गुणानेवालम्बते हंत इति खेदे महद्दुःखमेतत् असौ आवृतिः आवरणनामिका दुर्निवार्यास्य तमसः शक्तिर्महाप्रबलास्ति ॥१६॥
अस्याआवरणशक्त्या संबंधयुक्तं पुरुषं ध्रुवं निश्चितं अभावना अविचारो न विमुञ्चति सदा विचारहीन एवावतिष्ठते यदि विचारमपि
करोति तदा विपरीतभावना विपरीतविचारो देहादावहंभावना न विमुंचति देहादीनेव भावयति यदि सत्संगवशाद्विचारोपि जायते

आत्मतत्वं विचारयति तदा तत्रासंभावना न विमुंचति निश्चितं न मन्यते संशयो भवति यदि गुरुवेदान्तवाक्यश्रवणाच्छास्त्रीयं ज्ञानं भवति तदा एनं विप्रतिपत्तिर्न विमुंचति प्रतिपत्तिरनुभवो विप्रतिपत्तिरनुभवाभावो न विमुंचति यथावदनुभवो न भवति इत्यर्थः। तथावरणसंसर्गयुक्तं पुरुषं विक्षेपशक्तिर्विषयासक्तिरजस्रं निरंतरं क्षपयति विनाशयतीत्यर्थः ॥ १७ ॥ तमसो गुणानाह अज्ञानमिति–

अज्ञानमालस्यजडत्वनिद्राप्रमादमूढत्वमुखास्तमोगुणाः ॥ एतैः प्रयुक्तो न हि वेत्ति किंचिन्निद्रा-
लुवत्स्तंभवदेव तिष्ठति ॥१८॥ सत्वं विशुद्धं जलवत्तथापि ताभ्यां मिलित्वा शरणाय कल्पते ॥ य-
त्रात्मबिम्बः प्रतिबिम्बितः सन् प्रकाशयत्यर्कइवाखिलं जडम् ॥१९॥ मिश्रस्य सत्वस्य भवन्ति ध-
र्मास्त्वमानिताद्या नियमा यमाद्याः॥श्रद्धा च भक्तिश्च मुमुक्षुता च दैवीच संपत्तिरसन्निवृत्तिः २०

एतेऽज्ञानादयस्तमसो गुणाः संति एतैर्गुणैः प्रयुक्तः प्रेरितः पुरुषः किञ्चिन्नवेत्ति किन्तु निद्रालुवत् काष्ठवत् जडइव तिष्ठति ॥ १८ ॥ सत्व-गुणस्य धर्मानाह सत्वमिति– सत्वं सत्वगुणो जलवद्विशुद्धं यद्यपि तथापि ताभ्यां रजस्तमोभ्यां मिलित्वा आत्मप्रतिबिंबस्य शरणाय आश्रयत्वाय कल्पते यत्र सत्वे आत्मबिम्बः प्रतिबिम्बितः सन् अर्क इव सकलं जडं प्रकाशयति ॥ १९ ॥ तस्य रजस्तमोभ्यां मिश्रितस्य

सत्वस्य धर्मास्तु अमानित्वाद्या भवन्ति तथा नियमायमाश्च श्रद्धा च भक्तिश्च मुमुक्षुताच गीताषोडशाध्यायोक्ता दैवीसंपत्तिश्च भवति ॥ २० ॥ शुद्धसत्वगुणानाह विशुद्धेति- विशुद्धसत्वस्य गुणास्तु चित्तस्य प्रसादः प्रसन्नता स्वस्वरूपानुभवः परमा निरतिशयाप्रशान्तिश्च

॥ २१ ॥ तथा तृप्तिः प्रकर्षेणानन्दः परमात्मनिष्ठाच भवति यया परमात्मनिष्ठया परमानंदरसं समृच्छति सम्यगनुभवति ॥ २१ ॥ त्रिगुणात्मि- 

विशुद्धसत्वस्य गुणाः प्रसादः स्वात्मानुभूतिः परमा प्रशान्तिः ॥ तृप्तिः प्रहर्षः परमात्मनिष्ठा यया सदानन्दरसं समृच्छति ॥२१॥ अव्यक्तमेतत्त्रिगुणैर्निरुक्तं तत्कारणं नाम शरीरमात्मनः ॥ सुषुप्तिरेतस्य विभक्त्यवस्था प्रलीनसर्वेन्द्रियबुद्धिवृत्तिः ॥२२॥ सर्वप्रकारप्रमितिप्रशांतिर्बीजात्मनावस्थितिरेव बुद्धेः ॥ सुषुप्तिरेतस्य किल प्रतीतिः किंचिन्न वेद्मीति जगत्प्रसिद्धेः ॥ २३ ॥

कायाः प्रकृतेः स्वरूपमाह अव्यक्तमिति- एतत्त्रिगुणैः सत्वरजस्तमोभिर्मिलितै रूपलक्षितमव्यक्तं निरुक्तं कथितं तदस्यात्मनश्चिदाभासस्य कारणं शरीरमुक्तं एतस्य सकारणशरीरस्यात्मनः सुषुप्त्यवस्था अवस्थाविभागे नास्ति इयमवस्थाप्रलीना सर्वेन्द्रियबुद्धीनां वृत्तयो ॥ २१ ॥
यस्यामेतादृशीभवति ॥ २२ ॥ सुषुप्तेः स्वरूपमाह सर्वेति- अस्यां सुषुप्त्यवस्थायां सर्वप्रकाराणां प्रमितीनां विषयज्ञानानां प्रशान्तिर्नि-

वृत्तिर्भवति बुद्धेस्तु तदा बीजात्मना अविद्यात्मना स्थितिर्भवति सैषा सुषुप्तिः एतस्य बीजभूताज्ञानस्य प्रतीतिस्तु न किंचिद्वेद्मीति जगत्प्रसिद्धेर्भवतीति ॥ २३ ॥ देहादीनामनात्मत्वमाह देहेति– यतोऽज्ञानकल्पितमेतत्सर्वमतो देहेन्द्रियाद्यव्यक्तपर्यंतमिदं सर्वं हि निश्चयेन अनात्मैव अविद्याकल्पितत्वात् इति॥२४॥अनात्मनः स्वरूपमाह मायेति–मायामायाप्रकृतिर्मायाकार्यंमहदादिदेहपर्यन्तमिदं सद्रूपात्मतत्त्वविरुद्धं असदेवेति त्वं विद्धि कीदृशं पुनरिदं सर्वमित्यत आह मरुमरीचिकाकल्पं यथा मरुभूमिषु मरीचिकाचंद्ररश्मिप्रकाशरूपा जलरूपेणासती

देहेन्द्रियप्राणमनोहमादयः सर्वे विकारा विषयाः सुखादयः॥ व्योमादिभूतान्यखिलं च विश्वमव्यक्तपर्यंतमिदं ह्यनात्मा ॥ २४ ॥ मायामायाकार्यं सर्वं महदादिदेहपयन्तम् ॥ असदिदमनात्मतत्त्वं विद्धि त्वं मरुमरीचिकाकल्पम् ॥ २५ ॥

अविद्यमानापि सतीव प्रतीयते तद्वदिति ॥२५॥ आत्मैव सृतिमोक्षबन्धनकरः सौगुण्यदौर्गुण्यतो मुक्तिर्ब्रह्मविवेकतोऽभिरमणं देहत्रये संत्यज जन्मान्धत्वलुखादयो न च सतो देहादिधर्मा इमे इत्युक्तं गुरुणा विवेककमणौ युग्माभिधेऽध्यायके ॥ इति श्रीजगाधरीनगरस्थसारस्वतवंशावतंसश्रीमन्मिश्रहरिधनपुरोहितात्मजवेदान्तनिष्ठपण्डितहरिनामदत्तविरचितायां विवेकचूडामणिटीकायां सुबोधिन्यां विचाराख्य-

भूमिनिरुपणोनाम द्वितीयोध्यायः ॥ २ ॥ द्वितीयाध्याये सामान्यतो ब्रह्मणः सत्यत्वमुक्तम्। जगतश्च मिथ्यात्वं सम्यक्प्रतिपादितमिदानीं ब्रह्मणः स्वरूपं दिदर्शयिषुर्ब्रह्मज्ञानं स्तौति अथेत्यादि नवभिःश्लोकैः अथेत्यात्मनिरूपणारंभोत्साहद्योतकमव्ययम् । ते तुभ्यं परमात्मनः स्वरूपं सम्यक् प्रवक्ष्यामि कथयिष्यामि । यत्परमात्मस्वरूपं विज्ञाय नरो बंधान्मुक्तः कैवल्यमश्नुते प्राप्नोतीत्यर्थः ॥ २६ ॥ परमात्मनः

अथ ते संप्रवक्ष्यामि स्वरूपं परमात्मनः ॥ यद्विज्ञाय नरो बंधान्मुक्तः कैवल्यमश्नुते ॥ २६ ॥
अस्ति कश्चित्स्वयं नित्यमहंप्रत्ययलम्बनः ॥ अवस्थात्रयसाक्षीसन्पंचकोशविलक्षणः ॥ २७ ॥
यो विजानाति सकलं जाग्रत्स्वप्नसुषुप्तिषु ॥ बुद्धितद्वृत्तिसद्भावमभावमहमित्ययम् ॥ २८ ॥
यः पश्यति स्वयं सर्वं यन्न पश्यति कश्चन ॥ यश्चेतयति बुद्ध्यादि न तद्यं चेतयत्ययम् ॥ २९ ॥

स्वरूपं सकलसाक्षिभूतमाह अस्तीति– अस्ति कश्चिदविदितनामरूपआत्मा स्वयंसिद्धः नित्यं सदा अहंप्रत्ययस्याश्रय अवस्थात्रयसाक्षी सन्नपि पंचकोशेभ्यो विलक्षणः॥२७॥ यःसर्वं विशेषेण जानाति कुत्र जाग्रत्स्वप्नसुषुप्तिषु कथं अहमित्ययं बुद्धिं तद्वृत्तिसद्भावं च जानाति जाग्रति बुद्धेर्वृत्तीनां सद्भावं स्वप्ने जानाति बुद्धि तद्वृत्त्यभावं च जानाति सुषुप्तौ अयमात्मेत्यर्थः ॥ २८ ॥ यः स्वयं साक्षात्सर्वं पश्यति यमात्मानं ॥२२॥

कश्चन न पश्यति यो बुद्ध्यादिकं प्रकाशयति तद्बुद्ध्यादिकं यमात्मानं न प्रकाशयति अयमात्मेति विद्धि ॥ २९ ॥ येनात्मना इदं सर्वं व्याप्तं यमात्मानं कश्चिन्न व्याप्नोति इदं सर्वं यस्य प्रतिबिंबरूपं यस्य भासमानस्य भासा इदं सर्वमनु पश्चाद्भासते यमात्मेत्यर्थः ॥ ३० ॥ देहेंद्रियमनोधियो यस्य सन्निधिमात्रेण प्रेरिता इव स्वकीयेषु विषयेषु प्रवर्त्तते ॥३१॥ अहंकारादिदेहान्ताः सुखा-

येन विश्वमिदं व्याप्तं यन्न व्याप्नोति किंचन ॥ आभारूपमिदं सर्वं यं भांतमनुभात्ययम् ॥ ३० ॥
यस्य सन्निधिमात्रेण देहेन्द्रियमनोधियः ॥ विषयेषु स्वकीयेषु वर्तंते प्रेरिता इव ॥ ३१ ॥
अहंकारादिदेहान्ता विषयाश्च सुखादयः ॥ वेद्यन्ते घटवत् येन नित्यबोधस्वरूपिणा ॥ ३२ ॥
एषोन्तरात्मा पुरुषः पुराणो निरंतराखण्डसुखानुभूतिः ॥ सदैकरूपः प्रतिबोधमात्रो येनेषिता वागसवश्चरन्ति ॥ ३३ ॥

दीनां भोक्तृत्वेन साधनत्वेन च विद्यमानास्तथा सुखादयो विषयाश्च नित्यबोधस्वरूपिणा येनात्मना घटवद्वेद्यंते ॥ ३२ ॥ एष अंतरात्मा साक्षी पुराणः सनातनः पुरुषः निरंतराखण्डसुखानुभवरूपः सदा एकरूपः केवलज्ञानमात्रस्वरूपः येनेषिता येनात्मना इच्छामात्रेण

प्रेरिता वागादिज्ञानकर्मेन्द्रियाणि असवः प्राणाश्चरंति स्वविषयेषु प्रवर्तंते ॥ ३३ ॥ अत्रैवांतःकरणे बुद्धिरूपायां गुहायामव्याकृताकाशे निवृत्तसर्वसंकल्पे हृदि स्वच्छप्रकाशो यमात्माकाशः उच्चैः पूर्णतया रविवत्प्रकाशते किंकुर्वन्स्वतेजसा इदं सर्वं प्रकाशयन्साक्षिरूपेण वर्तत इत्यर्थः ॥ ३४ ॥ वर्तनमेवाह ज्ञातेति- मनसो अहंकारस्य च विकाराणां तथा देहेन्द्रियप्राणकृतकर्मणां च ज्ञातैव केवलं यथा-



अत्रैव सत्त्वात्मनि धीगुहायामव्याकृताकाशउशत्प्रकाशः॥ आकाश उच्चैरविवत्प्रकाशते स्वते-
जसा विश्वमिदं प्रकाशयन् ॥३४॥ ज्ञाता मनोहंकृतिविक्रियाणां देहेंद्रियप्राणकृतक्रियाणाम्॥
अयोग्निवत्ताननुवर्तमानो न चेष्टते नो विकरोति किंचन ॥३५॥ न जायते नो म्रियते न वर्द्धते
न क्षीयते नो विकरोति नित्यः॥विलीयमानेपि वपुष्यमुष्मिन्न लीयते कुंभ इवांबरः स्वयम् ॥३६॥

ग्निस्तप्तायसि वर्तमानो वर्तुलाद्ययसः स्वरूपमनुवर्तते स्वयं तु न चेष्टते न किंचिद्विकारं प्राप्नोति तथायमात्मापि ॥ ३५ ॥ आत्मनो जन्मादिषड्भावविकाररहितत्वमाह नजायत इति- शरीरे जाते मृतेपि अयमात्मा न जायते न म्रियते न वर्द्धते न क्षीयते न विकारं

प्राप्नोति यतो नित्यः यथा घटे विलीयमानेपि घटाकाशो न विलीयते तथायमात्मापि ॥ ३६ ॥ अयं परमात्मा प्रकृतिभ्यः कारणेभ्यः अव्याकृतादिपंचभूतेभ्यो भिन्नः विकृतिभ्यो देहादिब्रह्मांडान्तेभ्यो भिन्नः शुद्धज्ञानस्वभावः स्वयं निर्विशेषोपि इदमशेषं कार्यकारणरूपं जगत् भासयन् प्रकाशयन् विलसति लीलां करोतीव कथं जाग्रदादिष्ववस्थासु अहमहमिति साक्षाद्बुद्धेः साक्षिरूपेण भासयन्नि-

प्रकृतिविकृतिभिन्नः शुद्धबोधस्वभावः सदसदिदमशेषं भासयन्निर्विशेषः ॥ विलसति परमात्मा
जाग्रदादिष्ववस्थास्वहमहमिति साक्षात्साक्षिरूपेण बुद्धेः ॥३७॥ नियमितमनसामुं त्वं स्वमा-
त्मानमात्मन्ययमहमिति साक्षाद्विद्धि बुद्धिप्रसादात् ॥ जनिमरणतरंगापारसंसारसिंधुं प्रतर
भव कृतार्थो ब्रह्मरूपेण संस्थः ॥ ३८ ॥

त्यर्थः ॥ ३७ ॥ आत्मानं कथं विजानीयामित्यतआह नियमितेति– त्वममुं स्वमात्मानं नियमितमनसा निरुद्धमनसा कुतो यो बुद्धिप्रसादः बुद्धिनैर्मल्यं तस्माद्धेतोः आत्मनि स्वस्वरूपे स्थितं स्वमात्मानं अयमहमस्मीति साक्षात्प्रत्यक्षतया विद्धि । ततः किमित्यत आह तत आत्मानं ज्ञात्वा ब्रह्मरूपेण संस्थः स्थितः सन् जन्ममरणादितरंगैरपारं दुस्तरं संसारसमुद्रं प्रतर तीर्त्वा च कृतार्थो भवेति संबंधः ॥३८॥

॥ २४ ॥ कथमयं संसारबंधः पुरुषस्येत्याकांक्षयामाह अत्रेति— अत्रास्मिन्संसारे अनात्मनि देहादौ अहमिति या मतिः एष बंधः स च बंधः जननमरणक्लेशेषु यः संपातः मज्जनं तस्य हेतुः पुंसः स्वस्वरूपाज्ञानात्प्राप्तः येनाज्ञानेनायं पुरुषः इदमसद्वपुः मिथ्याभूतं शरीरं सत्यमस्तीत्यात्मबुद्ध्या पुष्यति पुष्णाति उक्षति सिंचति संस्करोति । अवति रक्षति च विषयैः सुखसाधनैः कैः क इव तन्तुभिः कोशर-

अ० ३

अत्रानात्मन्यहमिति मतिर्बंध एषोऽस्य पुंसः प्राप्तोऽज्ञानाज्जननमरणक्लेशसंपातहेतुः ॥ येनै-
वायं वपुरिदमसत्सत्यमित्यात्मबुद्ध्या पुष्यत्युक्षत्यवति विषयैस्तंतुभिः कोशकृद्वत् ॥३९॥ अत-
स्मिंस्तद्बुद्धिः प्रभवति विमूढस्य तमसा विवेकाभावाद्वै स्फुरति भुजगे रज्जुधिषणा ॥ ततो
ऽनर्थव्रातो निपतति समादातुरधिकस्ततो योऽसद्ग्राहस्स हि भवति बंधः शृणु सखे ॥ ४० ॥

चनासूत्रैः कोशं कोशकारवत् इति ॥ ३९ ॥ तत्र कारणमाह अतस्मिन्निति द्वाभ्यां— विमूढस्यानात्मज्ञस्य पुरुषस्य तमसा अज्ञानेन तस्मिन् अनात्मनि शरीरादौ तद्बुद्धिरात्मबुद्धिः स्फुरति तया च समादातुर्गृहीतुरनर्थव्रातो निपतति भवति एवं तत एव अनात्मनि ॥ २४ ॥ आत्मबुद्ध्या यो असद्ग्राहो मिथ्याग्रहणं स हि बंधो भवति इति मम वचनं शृणु अवधारयेत्यर्थः हे सखे हितोपदेशपात्रेति संबंधः॥४०॥

आत्मनः स्वरूपाज्ञाने तमसः कारणतामाह अखण्डेति– अखण्डं नित्यं अद्वयमात्मतत्त्वमिति बोधशक्त्या ज्ञानसामर्थ्येन स्फुरंतं प्रकाशमानमनन्तप्रभावमात्मानं एषा तमोमयी आवरणशक्तिः समावृणोति आच्छादयति यथा राहुरर्कबिंबमाच्छादयति ॥ ४१ ॥ आवरणस्य दुःखहेतुत्वमाह तिरोभूत इति– एवमेतादृशे अत्यन्तनिर्मले तेजोवति स्वात्मनि तिरोभूते स्वाज्ञानेनाच्छादिते सति तदैव पुमान् अना-

अखण्डनित्याद्वयबोधशक्त्या स्फुरन्तमात्मानमनन्तवैभवम् ॥ समावृणोत्यावृतिशक्तिरेषा त-
मोमयीराहुरिवार्कबिम्बम् ॥ ४१ ॥ तिरोभूते स्वात्मन्यमलतरतेजोवति पुमाननात्मानं मोहा-
दहमिति शरीरं कलयति ॥ ततः कामक्रोधप्रभृतिभिरमुं बंधनगुणैः परं विक्षेपाख्या रजस
उरुशक्तिर्व्यथयति ॥ ४२ ॥

त्मभूतमपि शरीरं मोहात् अहमित्यात्मानं कलयति गणयति मन्यते इत्यर्थः । ततो देहाध्यासानंतरं विक्षेपनाम्नी रजस उत्पन्ना बलवती शक्तिः कामक्रोधादिभिर्दुःखसाधनैर्बंधनगुणैर्बंधनरज्जुभिरेतं पुरुषं परं अत्यन्तं व्यथयति दुःखितं करोतीत्यर्थः ॥ ४२ ॥

ततः किमित्यतआह महामोहेत्यादि चतुर्भिः— महामोहो मूलाज्ञानं स एव ग्राहः तद्ग्रसनेन गलितं विनष्टं आत्मावगमनं आत्मज्ञानं यस्य सोयं 
पुरुषो धियो बुद्ध्या अनुगुणतया बुद्धिगुणान् कर्तृभोक्तृत्वादीन् आत्मनि मन्यमानः धियो बुद्धेर्नानावस्थां प्राप्य स्वयं तदनुरूपकर्माणि
 कुर्वन् विषयविषपूर्णेस्मिन् अपारे संसारेजलनिधौ समुद्रे निमज्योन्मज्यायं कुत्सितगतिर्निंदितदुःखं प्राप्तो भ्रमति ॥ ४३ ॥ यथाभ्रपंक्ति- 

महामोहग्राहग्रसनगलितात्मावगमनो धियो नानावस्थां स्वयमभिनयंस्तद्गुणतया ॥ अ-
पारे संसारे विषयविषपूरे जलनिधौ निमज्योन्मज्यायं भ्रमति कुमतिः कुत्सितगतिः ॥ ४३ ॥
भानुप्रभासं जनिताभ्रपंक्तिर्भानुं तिरोधाय विजृंभते यथा ॥ आत्मोदिताहंकृतिरात्मतत्वं
तथा तिरोधाय विजृंभते स्वयम् ॥ ४४ ॥ कवलितदिननाथे दुर्दिने सांद्रमेघैर्व्यथयति हिमझंझा-
वायुरुग्रोयथैतान् ॥ अविरततमसात्मन्यावृते मूढबुद्धिं क्षययति बहुदुःखैस्तीव्रविक्षेपशक्तिः ॥ ४५ ॥

र्मेघमालाप्रभातः समुत्पन्नासती भानुं सूर्यमण्डलमाच्छाद्यवृद्धाद्दृश्यते तथेयमहंकृतिः अहंकार आत्मन एव उत्पन्ना आत्मतत्वमाच्छाद्य 
स्वयमेव विजृंभते विस्तारं प्राप्नोति ॥ ४४ ॥ दुर्दिने मेघाच्छादिताकाशदिने सघनमेघैर्दिननाथे सूर्ये आच्छादिते सति यथा शीतल उग्र-

वायुरेतान् व्यथयति पीडयति तथा तमसा अज्ञानेनात्मनि आच्छादिते सति इयं तीव्रा दुःसहाविक्षेपशक्तिः मूढबुद्धिं अनात्मज्ञं पुरुषं वहुदुःखैक्षयति व्यथयतीत्यर्थः ॥ ४५ ॥ एताभ्यां आवरणशक्तिविक्षेपशक्तिभ्यां पुरुषस्य बंधः प्राप्तः याभ्यां शक्तिभ्यां विमोहितोयं जीवो देहमात्मानं स्वस्वरूपं मत्वा संसारे भ्रमति ॥ ४६ ॥ संसारस्य वृक्षरूपतामाह वीजमिति– अस्य संसारवृक्षस्य बीजमुपादानका-

एताभ्यामेवशक्तिभ्यां बंधः पुंसः समागतः ॥ याभ्यां बिमोहितो देहं मत्वामानं भ्रमत्ययम् ॥४६॥
बीजं संसृतिभूमिजस्य तु तमो देहात्मधीरङ्कुरो रागः पल्लवमम्बु कर्म तु वपुः स्कन्धोस-
वः शाखिकाः ॥ अग्राणीन्द्रियसंहतिश्च विषयाः पुष्पाणि दुःखं फलं नानाकर्मसमुद्भवं
बहुविधं भोक्तात्र जीवः खगः ॥ ४७ ॥ अज्ञानमूलोयमनात्मबंधो नैसर्गिकोऽनादिरनंत
ईरितः ॥ जन्माप्ययव्याधिजरादिदुःखप्रवाहपातं जनयत्यमुष्य ॥ ४८ ॥

रणं तमः अज्ञानं देहात्मबुद्धिस्तु अंकुरः रागः स्नेहस्तु पल्लवस्थानीयः कर्म कर्माणि अंबु जलेन सेचनं वपुः शरीरं स्कंधः असवः प्राणाः शाखास्थानीयाः अग्राणि सूक्ष्मशाखाविस्तारस्तु इंद्रियाणां समुदायः विषयाः पुष्पाणि फलं तु संसारवृक्षस्य नानाकर्मसमुद्भवं दुःखमेव वहुविधं अस्मिन् वृक्षे खगः पक्षिवत् स्थितो जीवः दुःखफलस्य भोक्तेत्यर्थः ॥ ४७ ॥ संसारस्य दुःखहेतुत्वमाह अज्ञानेति– अयमनात्म

 बंधः संसारबंधः अज्ञानमूलः नैसर्गिकः स्वाभाविकः अविद्यानिर्मितः अनादिरनंतश्च ज्ञानं विना उपायांतरैर्न नश्यति इति कथितः अस्य 
जीवस्य जन्ममरणादिप्रवाहे पातं जनयति करोतीत्यर्थः ॥ ४८ ॥ ज्ञानं विना शस्त्रादिभिर्न निवर्ततइत्याह नास्त्रैरिति– अयं बंधोऽस्त्रैः 
 शस्त्रसामर्थ्योत्पादकमंत्रैस्तंत्रैश्च तथा शस्त्रैः शक्त्यादिभिः तथा अनिलेन वायुवेगेन वह्निना च छेत्तुं न शक्यः अन्यैरपिकोटिकर्मभिः छेत्तुं 

नास्त्रैर्न शस्त्रैरनिलेन वह्निना छेत्तुं न शक्यो न च कर्मकोटिभिः ॥ विवेकविज्ञानमहासिना विना धातुः प्रसादेन सितेन मंजुना ॥ ४९ ॥ श्रुतिप्रमाणैकमतेः स्वधर्मनिष्ठा तयैवात्मविशुद्धिरस्य ॥ विशुद्धबुद्धेः परमात्मवेदनं तेनैव संसारसमूलनाशः ॥ ५० ॥

न शक्यः धातुरीश्वरस्य प्रसादेन कृपया सितेन तीक्ष्णीकृतेन मंजुना शोभनेन विवेकपूर्णेन विज्ञानासिना विज्ञानखड्गेन विना छेत्तुं न
शक्यः ज्ञानेनैव छेत्तुं शक्य इत्यर्थः ॥ ४९ ॥ श्रौतज्ञानेनैव संसारनिवृत्तिरित्याह श्रुतीति– तत्र क्रममाह श्रुतिप्रमाणेष्वेका अनवच्छिन्ना 
मतिर्यस्य तस्य पुरुषस्य स्वधर्मनिष्ठा भवति तया धर्मनिष्ठयास्य आत्मविशुद्धिरन्तःकरणशुद्धिर्भवति विशुद्धबुद्धेः परमात्मज्ञानं जायते

तेनैव परमात्मज्ञानेन संसारस्य समूलनाशः मूलेनाज्ञानेन सहितस्य नाश इत्यर्थः ॥ ५० ॥ आत्मनोऽन्नमयादिकोशेभ्यो विवेचनार्थं कोश-
कृतावरणमाह कोशैरिति पंचभिः– निजशक्तिरात्मशक्तिरविद्या तत उत्पन्नैरन्नमयाद्यैः पंचभिः कोशैः संवृत आच्छादित आत्मा न भाति
न प्रतीयते यथा शैवालपटलैराच्छादितं वापीस्थं अम्बु जलं न भाति तद्वत् ॥ ५१ ॥ तस्य शैवालस्य वाप्यां जातस्याच्छादकतृणविशे-

कोशैरन्नमयाद्यैः पंचभिरात्मा न संवृतो भाति ॥ निजशक्तिसमुत्पन्नैः शैवलपटलैरिवाम्बु
वापीस्थम्॥५१॥तच्छैवालापनये सम्यक् सलिलं प्रतीयते शुद्धम् ॥ तृष्णासंतापहरं सद्यः सौख्य-
प्रदं परं पुंसः॥५२॥ पंचानामपि कोशानामपवादे विभात्ययं शुद्धः ॥ नित्यानंदैकरसः प्रत्यग्रूपः
परं स्वयंज्योतिः ॥ ५३ ॥

षस्याऽपगमे निवृत्तौ यथा वापीस्थं जलं तृष्णासंतापहरं शुद्धं प्रतीयते कीदृशं तत् पुंसः परंसद्यः सौख्यप्रदं भवति ॥ ५२ ॥ एवं पंचानां
कोशानामपवादे विवेकवत्या बुद्धया निषेधे तत्रानात्मबुद्धिरूपे कृते सति अयमात्मा शुद्धो नित्यानंदैकरसः प्रत्यग्रूपः साक्षिरूपः परं

वि०चू० स्वयं ज्योतिर्विभाति प्रकाशत इत्यर्थः ॥ ५३ ॥ विदुषा विचारवता बंधनिवृत्तये आत्मानात्मविवेकः कर्तव्यस्तेनैवांतःकरणादेः सका- सटी०
शादात्मनो द्रष्टुर्भिन्नतया विवेचनेन पुरुषः स्वमात्मानं सच्चिदानंदं विज्ञायानंदीभवति ॥ ५४ ॥ विवेचनप्रकारमाह मुंजादिति- यथा
॥ २० ॥ मुञ्जात्तृणविशेषात्तदंतर्गतां इषीकां पृथक्कुर्वंति एवं दृश्यवर्गात्प्रत्पंचं तद्विलक्षणं द्रष्टारमसंगमक्रियमात्मानं विविच्य बुद्ध्या पृथक्कृत्य अ०

आत्मानात्मविवेकः कर्तव्यो बन्धमुक्तये विदुषा ॥ तेनैवानन्दीभवति स्वं विज्ञाय सच्चिदा- ३
नन्दम् ॥ ५४ ॥ मुञ्जादिषीकामिव दृश्यवर्गात्प्रत्यञ्च मात्मानमसङ्गमक्रियम् ॥ विविच्य तत्र
प्रविलाप्य सर्वं तदात्मना तिष्ठति यः स मुक्तः ॥ ५५ ॥ देहोयमन्नभवनोन्नमयस्तु कोशश्चा-
न्नेन जीवति विनश्यति तद्विहीनः ॥ त्वक्चर्ममांसरुधिरास्थिपुरीषराशिर्नायं स्वयं भवितु-
मर्हति नित्यशुद्धः ॥ ५६ ॥

तत्र तस्मिन्नेवात्मनि सर्वं मृदीव घटादिकं रज्ज्वादाविव सर्पादिकं प्रविलाप्य तदात्मना साक्षिरूपेण यस्तिष्ठति स मुक्तो ज्ञेय इत्यर्थः ॥५५॥ ॥ २७ ॥
अथ कोशपंचकादात्मविवेचनायादौ अन्नमयकोशाच्छरीरादात्मानं पृथक् दर्शयति देहोयमिति- अन्नमयकोशस्तु अयं देह एव कुतः

यतोऽन्नभवनः अन्नाद्भवति अन्नोद्भवाद्वीर्याद्भवति भक्ष्यमाणेनान्नेन जीवति अन्नविहीनश्च विनश्यति अयं देहः त्वक्चर्मादिराशिः तत्समुदायः स नित्यशुद्धः आत्मा स्वयं न भवितुमर्हति ॥ ५६ ॥ एतादृशस्य देहस्यात्मभावो न संभवतीत्याह पूर्वमिति– अयं देहो जन्मनः पूर्वं तथा मृतेर्मरणात्परं नास्ति द्वयोर्मध्ये जातक्षणो लब्धावसरः स्वल्पकालरमणीयोऽनियतस्वभावः परिणामीत्यर्थः अनेको जडश्च यथा

पूर्वं जनेरधिमृतेरपि नायमस्ति जातक्षणः क्षणगुणोऽनियतस्वभावः॥ नैको जडश्च घटवत्परिदृश्यमानः स्वात्मा कथं भवति भावविकारवेत्ता॥ ५७॥ पाणिपादादिमान्देहो नात्मा व्यङ्गेऽपि जीवनात् ॥ तत्तच्छक्तेरनाशाच्च न नियम्यो नियामकः ॥ ५८ ॥

मृदि घटो नाममात्रात्पृथक् नास्ति एवं स्वभावः एवंभूतो देहः सर्वभावविकारवेत्ता स्वात्मा कथं भवति न कथमपीत्यर्थः ॥ ५७ ॥ तस्यानात्मत्वे हेत्वंतरमाह पाणीति– अयं देहः पाणिपादाद्यंगवान् आत्मा न भवति कुतः यतः व्यंगेऽपि पाणिपादादिच्छेदनेऽपि जीवति पुरुषः छिन्नेऽपि पाणिपादादौ देहांतर्गतात्मनि पाणिपादादिशक्तेरनाशात् अयमात्मा नियम्यो न किं त नियामक एव ॥ ५८ ॥

देहादिसाक्षिण आत्मनो देहवैलक्षण्यमाह देहेति- आत्मा देहसाक्षी देहधर्माणां जन्मादीनां साक्षी देहकर्मणां तदवस्थानां साक्षी एतादृश स्य स्वत एव साक्षिण आत्मनो देहवैलक्षण्यं स्वत एव सिद्धमस्ति ॥ ५९ ॥ देहस्य निंदितत्वादप्यनात्मत्वमेवेत्याह शल्येति- देहस्तु शल्यानामस्थ्नां समुदायः मांसलिप्तः मलपूर्णः अतिकश्मलः पापयुक्तः एतस्मादात्मनो विलक्षणः सन् अयं देहः कथं स्वयमात्मा वेत्ता

देहतद्धर्मतत्कर्मतदवस्थादिसाक्षिणः ॥ स्वत एव स्वतः सिद्धं तद्वैलक्षण्यमात्मनः ॥ ५९ ॥
शल्यराशिर्मांसलिप्तो मलपूर्णोतिकश्मलः ॥ कथं भवेदयं वेत्ता स्वय मेतद्विलक्षणः ॥ ६० ॥
त्वङ्मांसमेदोस्थिपुरीषराशावहंमतिं मूढजनः करोति ॥ विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम् ॥ ६१ ॥ देहोहमित्येव जडस्य बुद्धिर्देहे च जीवे विदुषस्त्वहंधीः ॥
विवेकविज्ञानवतो महात्मनो ब्रह्माहमित्येव मतिः सदात्मनि ॥ ६२ ॥

स्यान्नकथमपीत्यर्थः ॥ ६० ॥ देहेहंमतिर्न योग्येत्याह त्वङ्मांसेति- एतादृशे देहे मूढमतिरेव अहंमतिं देहोहमिति मतिं करोति यस्तु विचारशीलो जनः स परमार्थभूतं निजस्वरूपं विलक्षणं वेत्ति जानातीत्यर्थः ॥ ६१ ॥ अज्ञाल्पज्ञसर्वज्ञानां देहादौ यथा बुद्धिर्भवति ता-

माह देहोहमिति- जडस्य अज्ञस्य देहोहमिति बुद्धिर्भवति शास्त्रज्ञस्य तु देहे च जीवात्मनि च अहंबुद्धिर्भवति आत्मानात्मविवेचनपूर्वकात्मज्ञानवतो महात्मनः आत्मनि साक्षिणि कूटस्थे ब्रह्माहस्मीत्येव सदा मतिर्भवति ॥ ६२ ॥ देहादावात्मबुद्धेर्हेयत्वमाह अत्रेति- हे मूढबुद्धे अत्र त्वगादिराशौ देहे आत्मबुद्धिं त्यज निर्विकल्पे सर्वात्मनि ब्रह्मणि आत्मबुद्धिं कुरुष्व ततः परमां शांतिं भजस्व ॥ ६३ ॥

अत्रात्मबुद्धिं त्यज मूढबुद्धे त्वङ्मांसमेदोस्थिपुरीषराशौ ॥ सर्वात्मनि ब्रह्मणि निर्विकल्पे कुरुष्व शांतिं परमां भजस्व ॥६३॥ देहेंद्रियादावसति भ्रमोदितां विद्वा नहंतां न जहाति यावत् ॥ तावन्न तस्यास्ति विमुक्तिवार्ता प्यस्त्वेष वेदान्तनयान्तदर्शी ॥६४॥ छायाशरीरे प्रतिबिंबगात्रे यत्स्वप्नदेहे हृदि कल्पितांगे ॥ यथात्मबुद्धिस्तव नास्ति काचिज्जीवच्छरीरे च तथैव मास्तु ॥६५॥

देहाभिमानत्यागं विना संसारो न निवर्तत इत्याह देहेति- असति मिथ्याभूते देहादौ भ्रमोत्पन्नां अहंतां विद्वान् यावन्न जहाति न त्यजति तावदेष विद्वान् वेदांतनयांतदर्शी वेदान्तशारीरकसूत्रभाष्यांतद्रष्टापि चेत्तस्य तावद्विमुक्तिवार्तापि नास्ति किंपुनर्विमुक्तिरित्यर्थः ६४ कथंपुनरस्मिन् शरीरे मतिः कर्तव्येत्याह छायेति- यथा पुरुषस्य छायायां यथा च जलादौ प्रतिबिंबशरीरे यथा स्वप्नदृष्टशरीरे यथा

 च मनोरथकल्पितशरीरे कदाचिदप्यात्मबुद्धिस्त्वनास्तितथा जीवत्यपि शरीरे आत्मबुद्धिर्मास्तु मा तां कुर्वित्यर्थः ॥ ६५ ॥ देहात्मबुद्धि- 
त्यागादेव मुक्तिमाह देहेति- असद्धियां अविदुषां नृणां पुंसां देहात्मधीरेव जन्मादिदुःखोत्पत्तेर्बीजं कारणं यतस्ततस्त्वं तां देहात्मबुद्धिं
 प्रयत्नात् त्यज देहात्मचित्ते त्यक्ते सति पुनः त्यागानंतरं भवाशा जन्मादिदुःखं न भविष्यतीत्यर्थः ॥ ६६ ॥ प्राणमयकोशमाह कर्मेन्द्रि- 

देहात्मधीरेव नृणामसद्धियां जन्मादिदुःखप्रभवस्य बीजम् ॥ यतस्ततस्त्वं जहि तां प्रय- 
त्नात्त्यक्ते तु चित्ते न पुनर्भवाशा ॥ ६६ ॥ कर्मेन्द्रियैः पंचभिरंचितोयं प्राणो भवेत्प्राणमयस्तु
कोशः ॥ येनात्मवानन्नमयोनुपूर्णः प्रवर्त्ततेसौ सकलक्रियासु ॥ ६७ ॥ नैवात्मापि प्राणमयो
वायुविकारो गंतागंता वायुवदन्तर्बहि रेषः ॥ यस्मात्किंचित्क्वापि नवेत्तीष्टमनिष्टं स्वं वान्यं
वा किंच न नित्यं परतंत्रः ॥ ६८ ॥

यैरिति- अयं प्राणः पंचभिः कर्मेन्द्रियैर्युक्तः प्राणमयः कोशः स्यात् येन प्राणमयकोशेन अनुपूर्णः युक्तोसौ अन्नमयः कोशः सकलक्रि- 
यासु प्रवर्तते ॥ ६७ ॥ प्राणमयस्यानात्मत्वमाह नैवेति- एष प्राणमयोपि आत्मा न भवति यतोयं वायुविकारः वायुवत् अंतर्गंता बहि

रागंता च यस्मादयं क्वापि कदापि किंचिन्न वेत्ति न जानाति इष्टं वा अनिष्टं वा स्वं वा अन्यं वा किंचिन्न जानाति नित्यं सदा परतंत्रः मन आधीनोस्ति ॥ ६८ ॥ अथ मनोमयकोशमाह ज्ञानेन्द्रियाणीति- चक्षुरादिपंच ज्ञानेंद्रियाणि मनश्च मनोमयः कोशः स्यात् स च ममेदं शरीरं अहं मनुष्यो ब्राह्मण इत्यादि वस्तुनि नानाविकल्पहेतुरित्यर्थः । बलीयांश्च यो मनोमयः कोशः स तत्पूर्वकोशं अभि-

ज्ञानेन्द्रियाणि च मनश्च मनोमयः स्यात्कोशो ममाहमिति वस्तु विकल्पहेतुः ॥ संज्ञादि-
भेदकलनाकलितो बलीयांस्तत्पूर्वकोशमभिपूर्य्य विजृंभते यः ॥ ६८ ॥ पंचेंद्रियैः पंचभिरेव
होतृभिः प्रचीयमानो विषयाज्यधारया ॥ जाज्वल्यमानो बहुवासनेन्धनैर्मनोमयाग्निर्वहति
प्रपंचम् ॥ ७० ॥ न ह्यस्त्यविद्या मनसोतिरिक्ता मनोह्यविद्याभवबंधहेतुः ॥ तस्मिन्विनष्टे
सकलं विनष्टं विजृम्भितेस्मिन्सकलं विजृम्भते ॥ ७१ ॥

पूर्य्य व्याप्य वृद्धिं प्राप्नोति ॥ ६९ ॥ अयं मनोमयकोशोग्निः सकलं प्रपंचं वहति धारयति यथा यज्ञाग्निः काष्ठेंधनैर्दीप्तः होतृभिर्घृतधारया प्रचीयमानोऽपूर्वोत्पत्तिद्वारा प्रपंचं धारयति एवं मनोमयकोशरूपोग्निर्बहुवासनेंधनैर्जाज्वल्यमानो पंचेंद्रियैः पंचहोतृभिर्विषयघृतधारया प्रचीयमानो देहान्तकालोत्पन्नाभिः स्मृतिभिः प्रपंचं धारयतीत्यर्थः ॥ ७० ॥ अविद्याया मनोरूपत्वमाह नह्यस्तीति- अविद्या

हि मनोद्वारैव स्वप्रभावं दर्शयति अतो मनसोतिरिक्ता अविद्या नास्त्येव मनोरूपा हि अविद्याभवबंधकारणं तस्मिन्मनसि संकल्पत्या-
गेन नष्टे सतिसकलजन्ममरणादिकं जगद्विनष्टं भवति तस्मिन्मनसि उदिते सति जन्ममरणादिकं जगदपि उदितं भवति ॥७१॥ मनसः
शक्तिं दर्शयति स्वप्नमिति- स्वप्नावस्थायां सकलपदार्थाभावेपि इदं मन एव स्वशक्त्या स्वप्रभावेणैव भोक्तृभोग्यादिसर्वं प्रपंचं सृजति

**स्वप्नेर्थशून्ये सृजति स्वशक्त्या भोक्त्रादिविश्वं मन एव सर्वम् ॥ तथैव जाग्रत्यपि नो**
**विशेषस्तत्सर्वमेतन्मनसो विजृम्भणम् ॥ ७२ ॥ सुषुप्तिकाले मनसि प्रलीने नैवास्ति किंचि**
**त्सकलप्रसिद्धेः ॥ अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुतोस्ति ॥ ७३ ॥ वायुना**
**ऽऽनीयते मेघः पुनस्तेनैव नीयते ॥ मनसा कल्प्यते बंधो मोक्षस्तेनैव कल्प्यते ॥ ७४ ॥**

तथैव जाग्रदवस्थायामपि नो विशेषः पुरुषस्य विक्षेपकारकं जीवसृष्टिरूपान्मानसात्प्रपंचादतिरिक्तं नास्ति तस्मात्सर्वमेतज्जगत् मनस
एव परिणामविशेष इत्यर्थः ॥ ७२ ॥ अत्रोपपत्तिमाह सुषुप्तीति- सुषुप्तिकाले मनसि प्रलीनेसति किंचिदपि विक्षेपकरं नास्तीति सक- ॥ ३० ॥
लजगति प्रसिद्धेर्हेतोः अतो मनःकल्पित एवास्य पुरुषस्य संसारो वस्तुतो मनः संकल्पाभावे संसारोपि नास्ति ॥७३॥ वायुना मेघ आनी-

यते उद्भाव्यते पुनस्तेनैव वायुना अदर्शनं नीयते तथैवायं बंधो मनसा कल्प्यते अस्य मोक्षोपि तेनैव मनसा कल्प्यते ॥ ७४ ॥ मनसः संसारकल्पनाप्रकारमाह देहादिसर्वेति- तन्मन एव देहादिसर्वविषये अस्य पुरुषस्य रागं प्रीतिं परिकल्प्य उत्पाद्यते न रागेण एनं पुरुषं बध्नाति यथा गुणेन रज्वा पशुं बध्नाति तद्वत् पश्चान्मोचनसमये अत्र सर्वविषये वैरस्यं अप्रीतिं विषवत् यथा विषे सर्वेषां वैरस्यं भ-

देहादिसर्वविषये परिकल्प्यरागं बध्नाति तेन पुरुषं पशुवद्गुणेन ॥ वैरस्यमत्र विषवत्सुविधाय पश्चादेनं विमोचयति तन्मन एव बंधात् ॥ ७५ ॥ तस्मान्मनः कारणमस्य जन्तोः बंधस्य मोक्षस्य च वा विधाने ॥ बंधस्य हेतुर्मलिनं रजोगुणैर्मोक्षस्य शुद्धं विरजस्तमस्कम् ॥ ७६ ॥ विवेकवैराग्यगुणातिरेकाच्छुद्धत्वमासाद्य मनो विमुक्त्यै॥भवत्यतो बुद्धिमतोमुमुक्षोस्ताभ्यां दृढाभ्यां भवितव्यमग्रे ॥ ७७ ॥

वति तद्वत् एनं तन्मन एव बंधाद्विमोचयति ॥ ७५ ॥ मनसो बंधमोक्षकारणत्वमाह तस्मादिति- तस्मात्कारणात् अस्य जन्तोर्बंधस्य मोक्षस्य वा विधाने रचनायां मन एव कारणं कथं रजोगुणैर्मलिनं बंधस्य हेतुर्भवति रजस्तमोगुणहीनं मनो मोक्षस्य हेतुर्भवति ॥ ७६ ॥ कथमेतदतआह विवेकेति- विवेकवैराग्यगुणानां आधिक्यात् इदं मन आत्मनः शुद्धत्वं आसाद्य संपाद्य विमुक्त्यै मोक्षाय भवति अतः

कारणात् बुद्धिमतो विचारवतो मोक्षेच्छावतः पुरुषस्य अग्रे प्रथमं ताभ्यां विवेकवैराग्याभ्यां दृढाभ्यां भवितव्यमिति ॥ ७७ ॥ तदुपायमाह मनोनामेति– मनोनाम्ना प्रसिद्धः गुणेन महाव्याघ्रः विषयरूपासु अरण्यभूमिषु महावनेषु चरति तिष्ठति अतो मोक्षेच्छावंतो ये
॥ ३१ ॥ साधवस्तेऽत्र विषयवनेषु न गच्छंतु विषयेषु प्रीतिं माकुर्वंत्वित्यर्थः ॥ ७८ ॥ मनसः सर्वकारणत्वमाह मन इति– अशेषान् सर्वान् वि- अ॰

मनो नाम महाव्याघ्रो विषयारण्यभूमिषु ॥ चरत्यत्र न गच्छंतु साधवो ये मुमुक्षवः ॥ ७८ ॥ २
मनः प्रसूते विषयानशेषान्स्थूलात्मना सूक्ष्मतया च भोक्तुः ॥ शरीरवर्णाश्रमजातिभेदान्
गुणक्रियाहेतुफलानि नित्यम् ॥ ७९ ॥ असंगचिद्रूपममुं विमोह्य देहेन्द्रियप्राणगुणैर्निबध्य॥
अहं ममेति भ्रमयत्यजस्त्रं मनः स्वकृत्येषु फलोपभुक्तिषु ॥ ८० ॥

षयान्स्वसंकल्पेन मन एव प्रसूते जाग्रति स्थूलान् स्वप्ने च सूक्ष्मान् प्रसूते रचयति । तथाभोक्तुर्जीवस्य शरीरवर्णाश्रमजातिभेदान् मन एव प्रसूते गुणक्रियाहेतुफलानि गुणाः शब्दादयः क्रिया व्यापारहेतुः कर्म फलं शरीरादि तानिसर्वाणिसर्वदा मन एव रचयतीति भावः ७९॥ ॥ ३१ ॥
मनसः प्राबल्यमाह असंगेति– अमुं जीवात्मानं स्वरूपतअसंगचिद्रूपं विमोह्य मोहं प्रापयित्वा देहेन्द्रियप्राणरूपैर्गुणैर्बंधनरज्जुभिर्निब-

ध्य बंधं प्रापयित्वा कथं अहं ममेति फलानां सुखदुःखादीनां भुक्तिर्भोगो येषु तेषु स्वकृतेषु कामसंकल्पादिषु अजस्रं निरंतरं मन एव भ्रमयति संसारदुःखं प्रापयतीत्यर्थः ॥ ८० ॥ तत्रोपपत्तिमाह अध्यासेति– पुरुषस्याविवेकिनोऽध्यासदोषात्संसृतिर्जन्ममरणादिरूपा भवति सचाध्यासरूपो बंधस्तु अनेनैव मनसा कल्पितो रचितः अत एतन्मनोरजस्तमोदोषयुक्तस्य विवेकहीनस्य जन्मादिदुःखस्य निदानं

अध्यासदोषात्पुरुषस्य संसृतिरध्यासबंधस्त्वमुनैव कल्पितः ॥ रजस्तमोदोषवतो विवे-
किनो जन्मादिदुःखस्य निदानमेतत् ॥ ८१ ॥ अतः प्राहुर्मनोऽविद्यां पण्डितास्तत्त्वदर्शिनः ॥
येनैव भ्राम्यते विश्वं वायुनेवाभ्रमण्डलम् ॥ ८२ ॥ तन्मनःशोधनं कार्यं प्रयत्नेन मुमुक्षुणा ॥
विशुद्धे सति चैतस्मिन्मुक्तिः करफलायते ॥ ८३ ॥

नाम करणं भवति ॥ ८१ ॥ पुनस्तदेव मनोऽविद्येत्याह अत इति– अतःकारणादेतन्मन एवाविद्या इति तत्वदर्शिनः पण्डिताः कथितवन्तः येनैव मनसा इदं विश्वं जगद्भ्राम्यते यथा वायुना घनपंक्तिर्भ्राम्यते ॥ ८२ ॥ मनःशान्तौ फलमाह तन्मन इति– तस्मात्कारणान्मनसः शोधनं कामरागादिराहित्येन मनोनैर्मल्यं कार्यं अस्मिन्मनसि विशुद्धे सति मुक्तिः करफलायते यथा करे स्थितं फलं स्पष्टत-

विं०चू० यावलोक्यंते तथात्मसाक्षात्कारो भवति इत्यर्थः ॥ ८३॥ पुनस्तदेवाह मोक्षैकेति- यः पुरुषो मोक्ष एव एकां मुख्यां सक्तिं प्रीतिं विधाय सटी०
तया प्रीत्या विषयेषु रागं प्रीतिं निर्मूल्य त्यक्त्वा सर्वं कर्म त्यक्त्वा सति ब्रह्माणि श्रद्धया चित्तैकाग्रेयण गुरुवेदान्तवाक्येषु दृढविश्वासे- अ०
॥ ३२ ॥ नच यः श्रवणमनननिदिध्यासनादिनिष्ठो भवति स बुद्धेः रजः स्वभावं बहिः प्रवृत्तिं विनाशयति आत्मनिष्ठो भवतीत्यर्थः ॥ ८४ ॥ ३

मोक्षैकसक्त्या विषयेषु रागं निर्मूल्य संन्यस्य च सर्वकर्म ॥ सच्छ्रद्धया यः श्रवणादिनिष्ठो
रजःस्वभावं स धुनोति बुद्धेः ॥ ८४ ॥ मनोमयो नापि भवेत्परात्मा ह्याद्यंतवत्वात्परि-
णामिभावात् ॥ दुःखात्मकत्वाद्विषयत्वहेतोर्द्रष्टा हि दृश्यात्मतया न दृष्टः ॥ ८५ ॥ बुद्धि-
र्बुद्धीन्द्रियैः सार्द्धं सवृत्तिः कर्तृलक्षणः ॥ विज्ञानमयकोशः स्यात्पुंसः संसारकारणम् ॥ ८६ ॥

मनोमयकोशस्यानात्मत्वमाह मनोमय इति- अयं मनोमयः कोशोपि आत्मा न भवति कस्मात् आद्यंतवत्वात् । तथा परिणामित्वात्
तथा दुःखात्मकत्वात् आत्मनो विषयत्वाच्च यश्च द्रष्टा स च दृश्यतया कदापि न दृष्टः द्रष्टृदृश्यभावयोर्विरोधादिति ॥ ८५ ॥ विज्ञानम- ॥ ३२ ॥
यकोशस्वरूपमाह बुद्धिरिति- एषा बुद्धिः ज्ञानेन्द्रियैः पंचभिर्युक्ता सती विज्ञानमयः कोशः स्यात् सएव कोश एव स वृत्तिः अहंकारादि

वृत्तियुक्तः कर्तृलक्षणः कर्तृत्वादिधर्मवान् पुंसः संसारकारणं भवति ॥ ८६ ॥ चित्प्रतिबिम्बसहितः प्रकृतेर्विकारोयं विज्ञानमयनाम्ना प्र-
सिद्धः ज्ञानेंद्रियैर्ज्ञानवान् कर्मेन्द्रियैः क्रियावान् सन् भृशं अत्यन्तं अजस्रं निरंतरं देहेंद्रियादिषु अभिमन्यते अभिमानं करोतीत्यर्थः ॥८७॥

अनुव्रजच्चित्प्रतिबिंबशक्तिर्विज्ञानसंज्ञः प्रकृतेर्विकारः ॥ ज्ञानक्रियावानहमित्यजस्रं देहे-
न्द्रियादिष्वभिमन्यते भृशम् ॥ ८७ ॥ अनादिकालोयमहं स्वभावो जीवः समस्तव्यवहारवो-
ढा ॥ करोति कर्माण्यपि पूर्ववासनः पुण्यान्यपुण्यानि च तत्फलानि ॥ ८८ ॥ भुंक्ते विचि-
त्रास्वपि योनिषु व्रजन्नायाति निर्यात्यधऊर्ध्वमेषः ॥ अस्यैव विज्ञानमयस्य जाग्रत्स्वप्रा-
द्यवस्थाः सुखदुःखभोगः ॥ ८९ ॥

अयमहंस्वभावो विज्ञानमयोऽनादिकालो जीवशब्देनोच्यते अयमेव समस्तव्यवहारधारकः पूर्वपूर्ववासनाप्रयुक्तः पुण्यानि अपुण्यानि
शुभान्यशुभानि च कर्माणि करोति तत्फलानि च भुंक्ते ॥ ८८ ॥ विचित्रासु योनिषु व्रजन्नपि एष अधः आयाति ऊर्द्ध्वं गच्छति अस्यैव

 विज्ञानमयस्य जाग्रत्स्वप्नाद्यवस्था भवंति सुखदुःखभोगोप्यस्यैव भवति इत्यर्थः ॥ ८९ ॥ विज्ञानमयस्यात्मोपाधित्वमाह देहादीति– पर- 
मात्मनोऽत्यंतसन्निधिवशात् अतिप्रकाशस्वभावोयम् विज्ञानमयः कोशो देहनिष्ठं यत् आश्रमधर्मकर्मगुणाभिमानं ममेति च सततं निरंतरं
 करोति अत एष विज्ञानकोशः अस्यात्मन उपाधिर्भवति यद्यस्मात्कारणात् आत्मधीः आत्मसंसर्गयुक्ता धीरेव भ्रमेण उर्द्धाधो 

देहादिनिष्ठाश्रमधर्मकर्मगुणाभिमानं सततं ममेति ॥ विज्ञानकोशोयमतिप्रकाशः प्रकृष्टसा-
न्निध्यवशात्परात्मनः ॥ अतो भवत्येष उपाधिरस्य यदात्मधीः संसरति भ्रमेण॥९०॥योयं विज्ञा-
नमयः प्राणेषु हृदि स्फुरत्स्वयं ज्योतिः ॥ कूटस्थः सन्नात्मा कर्ता भोक्ता भवत्युपाधिस्थः॥९१॥

गमनेन संसरति जन्ममरणादिसंसारं प्राप्नोतीत्यर्थः ॥ ९० ॥ विज्ञानमयस्य स्वयंप्रकाशत्वे बृहदारण्यश्रुतिं प्रमाणयति योयमिति– योयं
प्राणेषु इंद्रियेषु चेतयिता तद्व्यतिरिक्तोविज्ञानमयः विज्ञानप्रायः बुद्धिर्विज्ञानं तन्मयः तदनुसारी बुद्ध्यनुसारी तद्द्वारैवानुसरणीयो वि- 
ज्ञेयइत्यर्थः । हृदि बुद्धौ ज्योतिरवभासकः स्फुरति प्रकाशते अयं कूटस्थोनिर्विकारः सन् उपाधिस्थ आत्मा कर्ता भोक्ता च भवति ॥९१॥

बुद्धिसंबंधादात्मनो देहित्वमित्याह स्वयमिति– अयमात्मा सर्वात्मकः सन्नपि मृषात्मनो बुद्धेस्तादात्म्यदोषेण परं परिच्छेदं परिछिन्नतां उपेत्य प्राप्य स्वयं आत्मानं स्वत एव पृथक्त्वेन वीक्षते देहिनं पश्यतीत्यर्थः। यथाऽज्ञपुरुषः घटान् मृदो मृत्तिकातो भिन्नान् पश्यति तद्वत् ॥ ९२ ॥ तत्र दृष्टांतमाह उपाधीति– अयं परमात्मा स्वभावतः सदैकरूपोपि परउपाधिरहितोपि सन् उपाधिसंबंधवशात्

स्वयं परिच्छेदमुपेत्य बुद्धेस्तादात्म्यदोषेण परं मृषात्मनः॥ सर्वात्मकःसन्नपि वीक्षते स्वयं
स्वतः पृथक्त्वेन मृदो घटानिव ॥ ९२ ॥ उपाधिसंबंधवशात्परात्मा ह्युपाधिधर्मानतु
भाति तद्गुणः॥ अयोविकारानविकारिवह्निवत्सदैकरूपोपि परः स्वभावात्॥९३॥ शिष्य उवाच
भ्रमेणाप्यन्यथा वास्तु जीवभावः परात्मनः ॥ तदुपाधेरनादित्वान्नानादेर्नाश इष्यते ॥ ९४ ॥
अतोस्य जीवभावोपि नित्याभवति संसृतिः न निवर्त्तेत तन्मोक्षः कथं मे श्रीगुरो वद ॥९५॥

उपाधिगुणयुक्त उपाधिधर्मवानिवाभाति यथा लोहगोलकस्थो वह्निः स्वयं अविकारी सन्नपि अयःसंबंधात् अयोविकारवान् वर्तुलादिरूपवानिव भाति तद्वत्॥९३॥ शिष्य उवाच—हे गुरो जीवस्यायं जीवभावः परमात्मनः परमार्थतो ब्रह्मरूपस्यास्य भ्रमेण वास्तु अन्यप्रकारेणवास्तु तथापि तदुपाधेरनादित्वात् अनादिभावस्य च नाशादर्शनात् नोपाधेर्नाशः स्यात् ॥ ९४ ॥ अतःकारणात् अस्य जी-

विचू० वस्य जीवभावोऽपि नित्यस्तथा संसृतिर्जन्ममरणादिरूपा नित्या सती न निवर्तेत तदा तन्मोक्षः कथं भवेदिति हे गुरो त्वं वद कथये- सटी०
त्यर्थः ॥ ९५ ॥ श्रीगुरुरुवाच- हे विद्वन् त्वया सम्यक् पृष्टं उचितः प्रश्नः कृतः अस्योत्तरं सावधानेन चेतसा शृणु भ्रांत्या मोहितानां अ०
॥ ३४ ॥ पुंसां कल्पनाप्रामाणिकी न भवति इति ॥ ९६ ॥ तत्र युक्तिमाह भ्रांतिमिति- संबंधरहितस्य क्रियारहितस्य आकृतिरहितस्य चात्मनः ३

श्रीगुरुरुवाच सम्यक् पृष्टंत्वया विद्वन्सावधानेन तच्छृणु॥प्रामाणिकी न भवति भ्रांत्या मोहित-
कल्पना॥९६॥भ्रांतिं विना त्वसंगस्य निष्क्रियस्य निराकृतेः॥ न घटेतार्थसंबंधो नभसो नीलता
दिवत्॥९७॥ स्वस्य द्रष्टुर्निर्गुणस्याक्रियस्य प्रत्यग्बोधानन्दरूपस्यबुद्धेर्भ्रांत्या प्राप्तो जीवभावो
नसत्यो मोहापाये नास्त्यवस्तु स्वभावात् ॥ ९८ ॥

भ्रांतिं विना अर्थेन पदार्थेन संबंधो न घटेत यथा नभस आकाशस्य नीलतादिसंबंधो भ्रांतिं विना न घटते ॥ ९७ ॥ अत्रोपपत्ति-
माह स्वस्येति नवभिः श्लोकैः- कुलकम् स्वस्य जीवात्मभूतस्य द्रष्टुः साक्षिरूपस्य रूपादिगुणरहितस्य चलनादिक्रियारहितस्य प्रत्यग्बो- ॥ ३४ ॥
धानंदस्वरूपस्यायं जीवभावो बुद्धेः बुद्धिसंबंधाद्धेतोर्भ्रांत्या प्राप्तः सत्यो न भवति यदवस्तु अविद्यमानमेवभासते तत् रज्जौ सर्पादिवत्

मोहापाये अधिष्ठानस्वरूपज्ञाने सति रज्जुस्वरूपाज्ञाननिवृत्तौ अवस्तुसर्पवत् स्वभावादेव नास्ति तद्वत् ॥ ९८ ॥ अत्र दृष्टांतांतरमाह याव-दिति- भ्रांतिकल्पितपदार्थस्य यावद्भ्रांतिस्तावदेव सत्तास्थितिर्भवति यथा रज्ज्वां सर्पो भ्रांतिकालीन एव भ्रांतेर्नाशे यथा सर्पो नैवा-स्ति तद्वत् आत्मज्ञाने संसारसत्तापि नास्तीत्यर्थः ॥ ९९ ॥ अन्यद्दृष्टान्तमाह अनादित्वमिति- द्वाभ्याम् अविद्यायास्तथाऽविद्याकार्यस्य

यावद्भ्रांतिस्तावदेवास्य सत्ता मिथ्याज्ञानोज्जृंभितस्य प्रमादात्॥ रज्ज्वांसर्पो भ्रांतिकालीन एव भ्रांतेर्नाशे नैव सर्पोपि तद्वत् ॥९९॥ अनादित्वमविद्यायाः कार्यस्यापि तथेष्यते॥ उत्पन्नायां तु विद्यायामाविद्यकमनाद्यपि ॥२००॥ प्रबोधे स्वप्नवत्सर्वं सहमूलं विनश्यति॥ अनाद्यपीदंनो नित्यं प्रागभावइव स्फुटम् ॥ १ ॥ अनादेरपि विध्वंसः प्रागभावस्य वीक्षितः॥ यद्बुद्ध्युपाधि संबंधात्परिकल्पित सात्मनि ॥ २ ॥

जगतोपि अनादित्वमिष्यते आत्मज्ञानरूपायां विद्यायामुत्पन्नायां इदमाविद्यकं जगत् अनाद्यपि ॥ २०० ॥ यथा प्रबोधे निद्राक्षये स्वप्नं नश्यति तद्वत्समूलं अविद्यासहितं सर्वं जगद्विनश्यति दृष्टांतः यथा प्रागभावः अनादिरपि नो नित्यः तथेदं सर्वं जगत्स्फुटं अनाद्यपि नो नित्यमित्यर्थः ॥ १ ॥ प्रागभावोऽनादिरपि वर्तते तस्य ध्वंसो दृष्टः काणादनये इदं जीवत्वं यदात्मनि बुद्ध्युपाधिसंबंधात्परि-

कल्पितम् ॥२॥ तत्स्वरूपेण ततो वुद्ध्युपाधेरन्यद्विलक्षणं नास्ति वुद्ध्या सह स्वात्मनः संबंधस्तु मिथ्याऽज्ञानपूर्वकः ॥ ३ ॥ अतस्तस्य निवृत्तिः सम्यग्ज्ञानेनैव भवति अन्यथा प्रकारान्तरेण न भवति ब्रह्मात्मैकत्वविज्ञानं सम्यक्ज्ञानं श्रुतेर्मतम् ॥ ४ ॥ तद्ब्रह्मणासह आत्मनो जीवस्यैकत्वविज्ञानमात्मानात्मनोश्चिज्जडयोः सम्यग्विवेचनेन पृथकृतया स्वरूपज्ञानेनैव सिद्ध्यति नान्यथेत्यर्थः ततः कारणात्प्रत्यगात्मसदात्मनो-

जीवत्वं न ततो न्यत्तु स्वरूपेण विलक्षणं संवन्ध स्स्वात्मनो बुद्ध्या मिथ्याज्ञान पुरःसरः ॥ २०३ ॥
विनिवृत्तिर्भवे त्तस्य सम्यग्ज्ञानेन नान्यथा ब्रह्मात्मैकत्वविज्ञानं सम्यग्ज्ञानं श्रुतेर्मतम् ॥ २०४ ॥
तदात्मानात्मनोः संम्य विवेकेनैव सिद्ध्यति ततो विवेकः कर्तव्यः प्रत्यगात्मसदात्मनोः ॥५॥
जलंपङ्कवदत्यन्तं पङ्कापाये जलं स्फुटम् यथाभातितथात्मापिदोषाभावेस्फुटप्रभः ॥ २०६ ॥
असन्निवृतौ तु सदात्मना स्फुटं प्रतीतिरेतस्य भवेत्प्रतीचः ततो निरासः करणीय एव
सदात्मनः साध्वहमादिवस्तुनः ॥ २०७ ॥

र्जीवब्रह्मणोर्विवेकः विरुद्धांशत्यागेन स्वरूपाववोधः कर्तव्यः ॥५॥ अत्र दृष्टान्तमाह जलमिति-अत्यंतं पङ्कवज्जलं यथा पंकनिवृत्तौ कतकादिना कृसायांस्फुटंनिर्मलंभवतितद्वत् आत्मापिअविद्यादिदोषाभावेस्फुटप्रभोभाति ॥ ६ ॥ मिथ्याज्ञाननिवृत्तिं विना सद्वस्तुनः स्वरूपं न भातीत्याह

॥ ३५ ॥

असन्निवृत्ताविति- एवं आत्मनः सकाशादसन्निवृत्तौ असतां बुद्ध्यादीनां निवृत्तौ बोधे सति तदा सदात्मना सद्रूपेण प्रतीचः जीववास्तवरूपस्यैतस्य प्रतीतिर्ज्ञानं स्फुटम् प्रत्यक्षतया भवेत् ततः कारणात्सदात्मनः सकाशात् अहमादिवस्तुनः अहंकारादिपदार्थानां निरासः साधु सम्यक् तया करणीयएव ॥ ७ ॥ विज्ञानमयकोशस्यानात्मत्वमाह अतो नायमिति- यतः कारणात् अहमादिवस्तुनः बुद्धीन्द्रिया-

अतोनायं परात्मास्याद्विज्ञानमयशब्दभाक्॥ विकारित्वाज्जडत्वाच्च परिच्छिन्नत्वहेतुतः॥दृश्य-
त्वाद्व्यभिचारित्वान्नानित्योनित्यइष्यते ॥ ८॥ आनंदप्रतिबिम्बचुम्बिततनुर्वृत्तिस्त मोजृंभिता
स्यादानंदमयः प्रियादिगुणकः स्वेष्टार्थलाभोदयः ॥ पुण्यस्यानुभवे विभाति कृतिना
मानंदरूपः स्वयं भूत्वा नंदति यत्र साधु तनुभृन्मात्रः प्रयत्नं विना ॥ ९ ॥

दीनां निरासः कार्यः अतो विज्ञानमयकोशस्यापि बुद्धिज्ञानेंद्रियरूपत्वात् अयं विज्ञानमयः कोशाख्यः परमात्मा न भवति तत्र हेतूनाह विकारित्वात् जडत्वात्परिच्छिन्नत्वादित्यर्थः तथादृश्यत्वात् व्यभिचारित्वात् सुषुप्तावप्रतीतेर्व्यभिचारित्वं अत अनित्योयं कोशोनित्य आत्मा न भवति ॥ ८॥ आनन्दमयकोशस्य स्वरूपमाह आनन्देति द्वाभ्याम्- इष्टदर्शनलाभादिजन्याप्रियमोदादिरूपेण परिणता स्थिरी-

भूतान्तर्मुखा तमोवृत्तिरात्मानन्दप्रतिबिंबयुक्ता वृद्धासती आनंदमयः कोशःस्यात् सा च पुण्यफलभोगसमये विभाति प्रतीयते यत्रायं कृतिमान् पुण्यवान् तनुभृन्मात्रः प्राणिमात्रः प्रयत्नं विना स्वयं आनंदरूपोभूत्वा साधुसम्यक्तया नंदति सुखमनुभवति ॥ ९ ॥ अस्यानंदमयकोशस्य सुषुप्तौ उत्कटा अधिका स्फूर्तिर्भवति स्वप्नजागरयोस्तु ईष्टदर्शनादिना इषत्स्वल्पास्फूर्तिर्भवतीत्यर्थः ॥ १० ॥ आनंद

आनन्दमयकोशस्य सुषुप्तौ स्फुर्तिरुत्कटा स्वप्नजागरयोरीष दिष्टसंदर्शनादिना ॥ १० ॥
नैवा य मानंद मयः परात्मा सोपाधि कत्वा त्प्रकृते र्विकारात् कार्यत्वहेतोः सुकृतक्रियाया
विकारसंघात समाहि तत्वात् ॥ २११ ॥ पंचाना मपि कोशानां निषेधे युक्तितः श्रुतेः तन्नि-
षेधावधिः साक्षी बोधरूपो वशिष्यते ॥ २१२ ॥

मयकोशस्यानात्मत्वमाह नैवायमिति– अयमानंदमयकोशः परात्मा न भवति सोपाधिकत्वात् तमोगुणोपाधियुक्तत्वात् तमसः प्रकृते र्विकारत्वात् तमोगुणस्य कार्यत्वात् सुकृतक्रियायाः पुण्यकर्मणः विकाराः प्रियादिवृत्तयः तत्समुदाययुक्तत्वाच्च नायमात्मा ॥ ११ ॥ ननु कोशपंचकस्वरूपं निरूप्य तदात्मत्वनिषेधे तन्निरूपणमेव वृथेत्याशंक्य शरीरादिबुद्ध्यंतात्मवादिनां मतनिरासाय तदधिष्ठानत्वेनात्मस्व-

रूपदर्शनाय च तन्निरूपणनिषेधयोरावश्यकत्वमित्याह पंचानामितिसार्द्धेन- एवं पंचनामपि कोशानां निषेधस्य युक्तितः श्रवणात् तेषां कोशानां निषेधाधिष्ठानं सर्पनिषेधाधिष्ठानभूतरज्जुरिव बोधरूपः साक्षी अवशिष्यते ॥ १२ ॥ योयमात्मा पंचकोशविलक्षणः स्वयं ज्योतिरस्ति स एवावस्थात्रयसाक्षी सन् निर्विकारः निरंजनः निर्मलश्च सदानंदस्वरूपश्च स विपश्चिता विदुषा स्वात्मत्वेन विज्ञेयः

योयमात्मा स्वयंज्योतिः पंचकोशविलक्षणः॥ अवस्थात्रयसाक्षी सन्निर्विकारो निरंजनः ॥
सदानन्दः स विज्ञेयः स्वात्मत्वेन विपश्चिता ॥ १३ ॥

॥ १३ ॥ सत्यानन्दचिदात्मकोपि वपुषि प्रौढामहंतां पुमान् कृत्वामुह्यति कोशपंचकमिदं स्वात्मेति संमन्यते ॥ आत्मानात्मविवेकतोऽसति मतिं त्यक्त्वा स्वरूपं श्रयेदित्युक्तं गुरुणा विवेककमणौ रामाभिधेध्यायके ॥ इति श्रीजगाधरीनगरस्थसारस्वतवंशावतंस श्रीमन्मिश्रहरिधनपुरोहितात्मज वेदान्तनिष्ठपण्डितहरिनामदत्तविरचितायां विवेकचूडामणिटीकायां सुबोधिन्यां ध्यानापरपर्यायाऽसंसक्तिभूमिका-

निरूपणोनाम तृतीयोऽध्यायः ॥ ३ ॥ शिष्यउवाच ॥ एतदर्थमेव शिष्यप्रश्नमाह मिथ्येति- हेगुरो एतेषु पंचकोशेषु मिथ्यात्वेन निषि-
द्धेषु सत्सु सर्वाभावं विना किंचिदपि न पश्यामि तदात्मविपश्चिता आत्मविचारशीलेन स्वात्मरूपेण विज्ञेयं वस्तु किमु अस्ति न कि-
॥ ३७ ॥ मपीत्यर्थः॥१४॥पंचकोशनिषेधे किं शिष्यते इति प्रश्नेपंचकोशनिषेधे भावाभावसाक्षी आत्मैवावशिष्यते इति गुरुराह सत्यमिति पंचभिः अ०

शिष्यउवाच ॥ मिथ्यात्वेन निषिद्धेषु कोशेष्वे तेषु पंचसु ॥ सर्वाभावं विना किंचिन्नप- ४
श्यास्यत्र हे गुरो ॥ विज्ञेयं किमु वस्त्वस्ति स्वात्मनात्मविपश्चिता ॥ १४ ॥ श्रीगुरुरुवाच ॥
सत्यमुक्तं त्वया विद्वन्निपुणोसि विचारणे॥ अहमादिविकारास्ते तदभावोयमप्यनु ॥१५॥
सर्वे येनानुभूयंते यः स्वयं नानुभूयते ॥ तमात्मानं वेदितारं विद्धि बुद्ध्या सुसूक्ष्मया ॥ १६ ॥
तत्साक्षिकं भवेत्तत्तद्यद्येनानुभूयते ॥ कस्याप्यननुभूतार्थे साक्षित्वं नोपयुज्यते ॥ १७ ॥

श्रीगुरुरुवाच- हेविद्वन् त्वया सत्यमुक्तं विचारे निपुणोसि अत एवं विचारय ये अहंकारादयो ऽतंः करणस्य विकारास्ते तथा सुषु-
प्त्यादौ अहमादीनामभावोपि येनात्मना सर्वेनुभूयते यश्चात्मा केनापि नानुभूयते स्वयमेव वर्तते ॥ १५ ॥ तं वेदितारं आत्मानं विद्धि ॥ ३७ ॥
सूक्ष्मयाऽतिविचारनिपुणया बुद्ध्येत्यर्थः ॥ १६ ॥ यद्यद्वस्तु येनानुभूयते तत्तद्वस्तु तत्साक्षिकं भवेत् अयमात्मा तु प्रमाणाविषयत्वात्के-

नापि नानुभूयते अननुभूतार्थे कस्यापि साक्षित्वं नोपयुज्यते ॥ १७ ॥ अतोसौ आत्मरूपोभावः सद्वस्तुस्वसाक्षिकः यतः स्वेनैवानुभूयते अतः प्रत्यगात्मा साक्षात्स्वयं परं ब्रह्म इतरः परं न भवति ॥ १८ ॥ योसावात्मा अहमहमित्यनेकधा अंतः स्फुरन् जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरं समुज्जृम्भते प्रकाशते किं कुर्वन् नानाविकारवत इमान् अहंकारादीन् पश्यन् स्वयं च नित्यानंदचिदात्मना हृदि स्फुरति तमेतं

असौ स्वसाक्षिको भावो यतः स्वेना नुभूयते ॥ अतः परं स्वयं साक्षा त्प्रत्यगात्मा न चे तरः १८॥
जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरं यो सौ समुजृम्भते प्रत्यग्रूपतया सदा ह मह मि त्यंतः स्फुर
न्नैकधा ॥ नानाकारविकारभागिन इमान् पश्य न्नहंधीमुखा न्नित्यानन्दचिदात्मना स्फु-
रति तं विद्धि स्व मेतं हृदि ॥१९॥ घटोदके विम्वित मर्कविम्व मालोक्य मूढो रवि मेव मन्यते॥
तथा चिदाभास मुपाधिसंस्थं भ्रांत्या ह मित्ये व जडो भिमन्यते ॥ २० ॥

स्वमात्मानं विद्धि ॥१९॥ चिदाभासस्यानात्मत्वे दृष्टांतमाह घटोदकइति– यथा मूढः पुरुषो घटोदके प्रतिविम्वितमर्कविम्वमवलोक्य तं रविमेव मन्यते नतु विंवतया एवं अंतःकरणोपाधिसंस्थं चिदाभासं जडोऽविवेकी पुरुषो भ्रांत्या अहमित्येव स्वात्मानमेवाभिमन्यते इत्यर्थः ॥२०॥

दृष्टान्तमाह घटमिति- यथा विदुषा घटं जलं जलस्थमर्कप्रतिविम्बं च एतत्त्रितयं विहाय त्यक्त्वा एतत्त्रितयावभासकः तटस्थो निर्विकार आकाशस्थोर्को विनिरीक्ष्यते स्वयं प्रकाशो यथावत् यथा ॥२१॥ एवं तथा देहे धियं वुद्धिं धीस्थं चित्प्रतिविंबं च विसृज्य त्यक्त्वा वुद्धौ गुहायां निहितं द्रष्टारं आत्मानं अखंडबोधं सर्वप्रकाशकं कार्यकारणाभ्यां विलक्षणम् ॥ २२ ॥ नित्यं विभुं व्यापकं अतएव सर्वगतं

घटं जलं तद्गतमर्कबिम्बिं विहाय सर्वं विनिरीक्ष्यतेर्कः ॥ तटस्थ एतत्त्रितयावभासकः स्वयं
प्रकाशोविदुषा यथा यथा॥२१॥ देहं धियं चित्प्रतिबिम्ब मेवं विसृज्य बुद्धौ निहितं गुहायां॥
द्रष्टारमात्मानमखण्डबोधं सर्वप्रकाशं सदसद्विलक्षम् ॥ २२ ॥ नित्यं विभुं सर्वगतं सुसूक्ष्म-
मन्तर्बहिःशून्यमनन्यमात्मनः ॥ विज्ञाय सम्यङ्निजरूपमेतत्पुमान् विपाप्मा विरजो विमृत्युः
॥२३॥ विशोक आनंदघनो विपश्चित्स्वयं कुतश्चिन्न बिभेति कश्चित् ॥ नान्योस्ति पंथा भव-
बंधमुक्तेर्विना स्वतत्त्वावगमं मुमुक्षोः ॥ २४ ॥

अतिसूक्ष्मं यस्यांतर्वहिर्वान्यत्किंचिन्नास्ति आत्मनः स्वस्मादनन्यं अभिन्नं स्वस्वरूपं एतदात्मतत्वं सम्यग्विज्ञाय ज्ञात्वा पुमान् विपाप्मा पापरहितः सन् तथा विरजः विगतमनोमलः विमृत्युः त्यक्तदेहाभिमानत्वान्मृत्युभयरहितः ॥ २३ ॥ अतएव विशोकः आनन्दपरि- ॥ ३८ ॥

पूर्णः स्वयं विपश्चित् विद्वान् कश्चिदपि कुतश्चित् कस्माद्ऽपि न बिभेति मुक्तो भवतीत्यर्थः एवं मुमुक्षोर्मोक्षेच्छावतः स्वस्वरूपज्ञानं विना भवबंधमुक्तेः अन्यः पंथा उपायो नास्ति ॥ २४ ॥ एवमात्मनो ब्रह्मणोऽभिन्नत्वविज्ञानं संसारमुक्तेः कारणं येनात्मनो ब्रह्मविज्ञानेन अद्वितीयं आनंदस्वरूपं ब्रह्म बुधैः संपद्यते प्राप्यते ॥ २५ ॥ एवं भूतो विद्वान् पुनः संसृत्यै संसाराय नाववर्त्तते नागच्छति अस्मिन् लोके

ब्रह्माभिन्नत्वविज्ञानं भवमोक्षस्य कारणम् ॥ येनाद्वितीयमानन्दं ब्रह्म संपद्यते बुधैः ॥ २५ ॥
ब्रह्मभूतस्तु संसृत्यै विद्वान्नावर्तते पुनः ॥ विज्ञातव्यमतः सम्यग्ब्रह्माभिन्नत्वमात्मनः ॥ २६ ॥
सत्यं ज्ञानमनन्तं ब्रह्म विशुद्धं परं स्वतः सिद्धम् ॥ नित्यानन्दैकरसं प्रत्यगभिन्नं निरंतरं
जयति ॥२७॥ सदिदंपरमाद्वैतं स्वस्मादन्यस्य वस्तुनोऽभावात् ॥ नह्यन्यदस्ति किंचित् सम्यक्
परमार्थतत्वबोधदशायाम् ॥ २८ ॥

अत आत्मनो ब्रह्माभिन्नत्वं सम्यग् विज्ञातव्यमिति ॥ २६ ॥ ब्रह्मस्वरूपमाह सत्यमिति— सत्यज्ञानानंतस्वरूपं ब्रह्म परं विशुद्धं स्वत एव सिद्धमस्ति तच्च प्रत्यगभिन्नमस्य जीवात्मनः स्वरूपभूतं निरंतरं सदा जयति प्रकाशते ॥ २७ ॥ इदं सद्रूपं ब्रह्म स्वस्मादन्यस्य वस्तुनोऽ

विं०चू० भावात् परमाद्वैतमस्ति सम्यक् परमार्थतत्त्वस्य बोधदशायां हि यतः अन्यत्किंचिन्नास्ति ॥ २८ ॥ यदिदं सकलं विश्वं अज्ञानात् नाना- सटी०
रूपं प्रतीतमस्ति तत्सर्वं बोधदशायां प्रत्यस्ताशेषभावनादोषं निवृत्तोऽशेषभावनारूपो दोषो यस्मादेतादृशं सत् ब्रह्मैव भाति विदुषाम्
॥ ३९ ॥ ॥ २९ ॥ दृष्टान्तांतरमाह मृदितिद्वाभ्याम्- कुंभो घटो मृत्तिकायाः कार्यभूतो मृत्तिकातो भिन्नो नास्ति सर्वत्र कुंभे मृत्स्वरूपदर्शनात् कुं- अ०

यदिदं सकलं विश्वं नानारूपं प्रतीतमज्ञानात् ॥ तत्सर्वं ब्रह्मैव प्रत्यस्ताशेषभावनादोषम् ॥२९॥ १
मृत्कार्यभूतोपि मृदो न भिन्नः कुंभोस्ति सर्वत्र तु मृत्स्वरूपात् ॥ न कुम्भरूपं पृथगस्ति कुंभः
कुतो मृषा कल्पितनाममात्रः ॥३०॥ केनापि मृद्भिन्नतया स्वरूपं घटस्य संदर्शयितुं नशक्यते ॥
अतो घटः कल्पित एव मोहान्मृदेव सत्यं परमार्थभूतम् ॥३१॥ सद्ब्रह्मकार्यं सकलं सदेव त-
न्मात्रमेतन्नततोन्यदस्ति ॥ अस्तीति यो वक्ति न तस्य मोहो विनिर्गतो निद्रितवत्प्रजल्पः ॥ ३२ ॥

भस्य रूपं मृत्तिकातः पृथङ्नास्ति अतः कल्पितमात्रः कुंभो मृषामिथ्याभूतः कुतः स्यात् न कुतोपीत्यर्थः ॥ ३० ॥ तस्य कुंभस्य स्वरूपं
मृद्भिन्नतया केनापि सम्यक्दर्शयितुं न शक्यते अतो मृत्तिकायां घट इति नाम मोहात्मृषैव कल्पितम् किं तर्हि सत्यं परमार्थभूतं मृ- ॥ ३९ ॥
देव मृत्तिकेत्येव सत्यमिति ॥ ३१ ॥ दार्ष्टान्तिकमाह सदिति- एवमेतत्सकलं जगत्सद्ब्रह्म कार्यं सदेव सर्वदा सन्मात्रमेव सतोऽन्यद्

भिन्नं नास्ति यश्चानभिज्ञः जगत्सतो भिन्नमस्तीति वक्ति वदति तस्य मूर्खस्य मोहोऽज्ञानं न विनिर्गतः न नष्टः तस्य प्रजल्पः कथनं निद्रितवत्सुप्तप्रलापवत् मिथ्यैवेत्यर्थः ॥ ३२ ॥ अत्राथर्वश्रुतिं प्रमाणमाह ब्रह्मैवेदमिति- सर्वं ह्येतद्ब्रह्मेति अथर्वमाण्डूक्योपनिषदि इदं विश्वं ब्रह्ममात्रं यत आरोपितस्य रजतसर्पादिरूपेण प्रतीयमानस्याधिष्ठानात् शुक्तिरज्जुरूपाद्भिन्नता नास्ति पृथक्त्वाभावादिति॥३३॥

ब्रह्मैवेदं विश्वमित्येववाणी श्रौती ब्रूतेऽथर्वनिष्ठा वरिष्ठा ॥ तस्मादेतद्ब्रह्ममात्रं हि विश्वं नाधिष्ठानाद्भिन्नता रोपितस्य ॥ ३३ ॥ सत्यं यदि स्याज्जगदेतदात्मना न तत्वहानि-र्निगमाप्रमाणता ॥ असत्यवादित्वमपीशितुः स्यान्नैतत्त्रयं साधुहितं महात्मनाम् ॥ ३४ ॥ ईश्वरो वस्तुतत्वज्ञो न चाहं तेष्ववस्थितः ॥ न च मत्स्थानि भूतानीत्येवमेव व्यचीक्लृपत् ॥ ३५ ॥

जगत्सत्यत्वेऽनुपपत्तिमाह सत्यमिति- जगद्यदि सत्यं स्यात्तदा एतत्स्वरूपेण सदा तिष्ठेत् तत्त्वहानिः तत्परिणामो विनाशो वा न स्यात् तथा वाचारंभणमित्यादिनिगमस्याप्रमाणता स्यात् तथा वेदवक्तुरीश्वरस्य असत्यवादित्वं स्यात् एतत्त्रयं महात्मनां न साधु हितं सम्यक्तया न संमतमित्यर्थः ॥ ३४ ॥ अत्र श्रीकृष्णवाक्यं प्रमाणमाह ईश्वरइति- ईश्वरः श्रीकृष्णः सर्ववस्तुस्वरूपज्ञ इत्याह अहं भूतेषु म

व्यवस्थितः तानि च भूतानि मयि न स्थितानि तस्यैति कथनं भूतानामसत्वमेव प्रतिपादयति ॥ ३५ ॥ जगन्मिथ्यात्वेऽनुपलब्धिं प्रमा-
णमाह यदीति– यदि विश्वं सत्यं स्यात्तदा सुषुप्तावप्युपलभ्येत यतो नोपलभ्यते अतः स्वप्नदृश्यवन्मृषा असच्चेति ॥ ३६ ॥ तत्प्रतीतिस्तु
॥ ४० ॥ भ्रममूलेत्याह अतइति– अतः कारणात् इदं जगत् परमात्मनः पृथङ्नास्ति पृथक् प्रतीतिस्तु मुंजादिषु रज्वादिप्रतीतिवत् मृदादिषु घ-

यदि सत्यं भवे द्विश्वं सुषुप्ता वुपलभ्यताम्॥यन्नो पलभ्यते किंचि दतोऽस त्स्वप्नव न्मृषा ॥ ३६ ॥
अतः पृथ ङ्नास्ति जग त्परात्मनः पृथक्प्रतीति स्तु मृषा गुणादिवत् ॥ आरोपितस्या स्ति
कि मर्थवत्ता धिष्ठान माभाति तथा भ्रमेण ॥३७॥ भ्रांतस्य यद्य द्भ्रमतः प्रतीतं ब्रह्मैव तत्त
द्रजतं हि शुक्तिः ॥ इदंतया ब्रह्म सदैव रूप्यते त्वारोपितं ब्रह्मणि नाममात्रम् ॥ ३८ ॥

टादिप्रतीतिवन्मृषा मिथ्यैव आरोपितस्य पदार्थस्य किमर्थवत्ता न किमपि तथा आरोपितवस्तुस्वरूपेणाधिष्ठानमेव भ्रमेणाभाति ॥ ३७ ॥
आरोपितस्य नाममात्रत्वमित्याह भ्रांतस्येति– भ्रांतस्य वस्तुस्वरूपज्ञानशून्यस्य भ्रमतः भ्रांतितः यद्यत्प्रतीयते तत्तत्सर्वं ब्रह्मैव यथा र- ॥ ४० ॥
जतरूपेण या प्रतीता शुक्तिरेवं इदं जगत् इत्यत्र इदं तया सर्वदा ब्रह्मैव कथ्यते यदारोपितं ब्रह्मणि तत्तु नाममात्रमेव अंते ब्रह्ममा-

त्रावशेषात् ॥ ३८ ॥ एवमारोपितं मिथ्येति शिष्यायोपदिश्य तत्वमसीति वाक्योक्तभागत्यागलक्षणयोपलक्षितमात्मस्वरूपं दिदर्शयिषुरा-
चार्यः श्रुत्युक्तात्मस्वरूपं निरूपयति चतुर्भिः अत इत्यादिना अतः कारणात् यत्किंचिदिदं चकास्ति प्रतीयते तत्सर्वं परं ब्रह्मैव तस्य च
विशेषणानि सत् सद्रूपं अद्वितीयं विशुद्धविज्ञानघनं केवलविज्ञानस्वरूपं निरंजनं उपाधिरहितं अतएव प्रशांतं आद्यंतविहीनं अक्रियं

अतः परं ब्रह्म सदद्वितीयं विशुद्धविज्ञानघनं निरंजनम् ॥ प्रशांतमाद्यन्तविहीनमक्रियं
निरंतरानंदरसस्वरूपम् ॥ ३९ ॥ निरस्तमायाकृतसर्वभेदं नित्यं सुखं निष्कलमप्रमेयम् ॥
अरूपमव्यक्तमनाख्यमव्ययं ज्योतिः स्वयं किंचिदिदं चकास्ति ॥ ४० ॥ ज्ञातृज्ञेयज्ञानशून्य-
मनन्तं निर्विकल्पकम् ॥ केवलाखंडचिन्मात्रं परं तत्वं विदुर्बुधाः ॥ ४१ ॥

अचलं सर्वदानंदरसस्वरूपम् ॥ ३९ ॥ निरस्ता दूरीकृता मायाकृता सर्वे भेदा यस्मात् तत् नित्यं त्रिकालाबाध्यसुखस्वरूपं निष्कलं हानि-
वृद्धिरहितं प्रमाणाविषयं रूपरहितं अव्यक्तं इन्द्रियागोचरं अनाख्यं नामरहितं अव्ययं नाशरहितं स्वयं ज्योतिःस्वरूपमिति ॥ ४० ॥
ज्ञातृज्ञेयज्ञानारिक्तं अनंतं विकल्पानां कारणाभावान्निर्विकल्पं केवलाखंडचिन्मात्रस्वरूपं एतद्विशेषणोपलक्षितं वस्तु बुधा आत्मतत्वज्ञाः

परं तत्वं विदुः जानन्ति ॥ ४१ ॥ आत्मस्वरूपत्वादेव हेयोपादेयशून्यं मनोवाचामविषयमप्रमेयं अनाद्यनंतं महःतेजः स्वरूपं ब्रह्माहम- सटी०
वि०चू० स्मीति ध्येयम् ॥ ४२ ॥ तत्वं पदार्थशोधनप्रकारमाह तत्वमितिचतुर्भिः— तत्वमसीति श्रुत्या तत् त्वं पदाभ्यामभिधीयमानयोस्तयोः शो-
धितयोर्ब्रह्मात्मनोर्यदीत्थं मुहुरेकत्वमेव प्रतिपाद्यते ॥ ४३ ॥ तदैक्यं तयोर्लक्षितयोरेव संभवति अन्योन्यविरुद्धधर्मिणोर्वाच्ययोरेकत्वं न नि- अ०
॥ ४१ ॥ अहेयमनुपादेयं मनोवाचामगोचरम् ॥ अप्रमेयमनाद्यंतं ब्रह्म पूर्णमहं महः ॥ ४२ ॥ ४
तत्वं पदाभ्यामभिधीयमानयोर्ब्रह्मात्मनोः शोधितयोर्यदीत्थम् ॥ श्रुत्या तयोस्तत्वमसी-
ति सम्यगेकत्वमेव प्रतिपाद्यते मुहुः ॥ ४३ ॥ ऐक्यं तयोर्लक्षितयोर्न वाच्ययोर्निगद्यते
ऽन्योन्यविरुद्धधर्मिणोः ॥ खद्योतभान्वोरिव राजभृत्ययोः कूपाम्बुराश्योः परमाणुमेर्वोः ॥ ४४ ॥
तयोर्विरोधोयमुपाधिकल्पितो न वास्तवः कश्चिदुपाधिरेषः ॥ ईशस्य माया मह-
दादिकारणं जीवस्य कार्यं शृणु पंचकोशम् ॥ ४५ ॥
गद्यते कयोरिव तयोर्विरुद्धधर्मित्वमित्यत आह खद्योतभान्वोरिव तथा राजभृत्ययोरिव कूपसमुद्रयोरिव तथा परमाणुमेर्वोरिव ॥ ४४ ॥ ॥ ४१ ॥
अयं तयोर्ब्रह्मजीवयोर्विरोध ऐक्याभाव उपाधिकल्पितो न वास्तवः कश्चिद्भेदोस्ति एष उपाधिः क इत्यत आह शृणु ईशस्य उपाधि-

र्माया सा च कारणमुपाधिः महदादिकारणत्वात् जीवस्योपाधिर्हि पंचकोशम् कार्यं कार्योपाधिरित्यर्थः॥ ४५ ॥ एतौ द्वावुपाधी परजीवयोः ईशजीवयोर्भवतस्तयोरुपाध्योः सम्यक्निरासे निवारणे कृते सति न परो न जीवः किन्तु शुद्धं ब्रह्मैवावशिष्यते अत्र दृष्टान्तः नरेंद्रस्योपाधीराज्यं भटस्योपाधिस्तु खेटकं शस्त्रप्रहारादितयो राज्यशस्त्रप्रहारयोः अपोहे निवृत्तौ केवलं शरीरमात्रशेषे न भटो न राजेति

एतावुपाधी परजीवयोस्तयोः सम्यङ्निरासे न परो न जीवः॥ राज्यं नरेंद्रस्य भटस्य खेटकस्तयोरपोहे न भटो न राजा ॥ ४६ ॥ अथात आदेश इति श्रुतिः स्वयं निषेधति ब्रह्मणि कल्पितं द्वयम्॥ श्रुतिप्रमाणानुगृहीतबोधात्तयोर्निरासः करणीय एवम् ॥ ४७ ॥ नेदं नेदं कल्पितत्वान्न सत्यं रज्जुदृष्टव्यालवत्स्वप्नवच्च॥ इत्थं दृश्यं साधु युक्त्या व्यपोह्य ज्ञेयः पश्चादेकभावस्तयोर्यः ॥ ४८ ॥

राज्यचिह्नभृत्यचिह्ननिवृत्तौ भेदाप्रतीतेः ॥ ४६ ॥ आत्मन एकत्वे प्रपंचमिथ्यात्वे च श्रुतिं प्रमाणयति द्वाभ्याम् अथेति– अथात आदेशो नेति इति श्रुतिः स्वयं ब्रह्मणि कल्पितं द्वयं द्वैतं निषेधति एवं श्रुतिप्रमाणानुकूलबोधात् तयोः परजीवोपाध्योर्निरासः करणीयः ॥ ४७ ॥ इदं तया कल्पितत्वादिदंताविषयं वस्तु न सत्यं कथं रज्जुदृष्टव्यालवत् स्वप्नदृश्यवच्च इत्थं सम्यक् युक्त्या दृश्यं व्य-

पोह्य तत्र सत्यत्वदृष्टिं त्यक्त्वा पश्चात्तयोरीशजीवयोर्य एकभावः स ज्ञेयः निश्चेतव्य इत्यर्थः ॥ ४८ ॥ उपाधिनिरासाय भागत्यागलक्षणा-
माह ततस्त्विति- त्रिभिः श्लोकैः ततः परं तौ ईशजीवौ तु लक्षणया लक्षणावृत्या सुलक्ष्यौ सम्यक्लक्षणीयौ तयोरीशजीवयोरखण्डैक-
॥ ४२ ॥ रसत्वसिद्धये जहत्या वृत्या नालं कश्चित् तथा अजहत्यापि यत्र वाच्यार्थं त्यक्त्वा लक्ष्यार्थो गृह्यते स अजहतीवृत्तिः यथा काकेभ्यो अ० ४

ततस्तु तौ लक्षणया सुलक्ष्यौ तयोरखण्डैकरसत्वसिद्धये ॥ नालं जहत्या न तथाऽजहत्या
किन्तूभयार्थात्मिकयैव भाव्यम् ॥ ४९ ॥ स देवदत्तोयमितीह चैकता विरुद्धधर्मांशमपास-
पास्य कथ्यते ॥ यथा तथा तत्त्वमसीति वाक्ये विरुद्धधर्मानुभयत्र हित्वा ॥ ५० ॥

दधि रक्ष्यतामित्यत्र दध्युपघातके लक्षिते तत्र काकसहितेषु दध्युपघातकेषु लक्षणा अत्र तु नोभयग्रहणमसंभवात् किन्तूभयार्थात्मिकया
जहदजहलक्षणया तत्र भाव्यम् ॥ ४९ ॥ तामेवाह सइति- सोयं देवदत्त इति इह अत्र च विरुद्धधर्मान् त्यक्त्वा एकता उच्यते यथा ॥ ४२ ॥
तथा तत्त्वमसीति वाक्येपि विरुद्धधर्मान्सर्वज्ञत्वाल्पज्ञत्वादीन् ईशजीवोपाधीन् उभयत्र द्वयोर्हित्वा त्यक्त्वा ॥ ५० ॥

चिन्मात्रतांसंलक्ष्य बुधैर्विद्वद्भिः सदात्मनोरीशजीवयोश्चिन्मात्रतया अखण्डभावः चैतन्यमात्रस्वरूपेणपरिपूर्णानंदत्वं परिचीयते निश्चीयते इत्यर्थः एवंब्रह्मात्मनोरैक्यम खण्डता महावाक्यशतेन कथ्यते ॥ ५१ ॥ आत्मनोनिर्विकारत्वेश्रुतिमाह अस्थूलमिति– अस्थूलमनण्वित्यादि वाक्येन असत्सुदेहेंद्रियान्तःकरणादिषु आत्मभावंत्यक्त्वा घटादिवाधेनव्योमवत् अप्रतर्क्यंसंशयशून्यंस्वतःसिद्धं अखण्डबोधं स्वात्मानं विशुद्ध-

संलक्ष्य चिन्मात्रतया सदात्मनोरखण्डभावः परिचीयते बुधैः ॥ एवं महावाक्यशतेन क-
थ्यते ब्रह्मात्मनोरैक्यमखण्डभावः ॥ ५१ ॥ अस्थूलमित्येतदसन्निरस्य सिद्धं स्वतो व्योमव
दप्रतर्क्यम् ॥ अतो मृषामात्रमिदं प्रतीतं जहीहि यत्स्वात्मतया गृहीतम् ॥ ब्रह्माहमित्येव
विशुद्धबुद्ध्या विद्धि स्वमात्मान मखण्डबोधम् ॥ ५२ ॥ मृत्कार्यं सकलं घटादि सततं मृन्मात्र
मेवाहितं तद्वत्सज्जनितं सदात्मकमिदं सन्मात्रमेवाखिलम् ॥ यस्मा न्नास्ति सतः परं कि मपि
तत्सत्यं स आत्मा स्वयं तस्मा त्तत्व मसि प्रशान्त ममलं ब्रह्मा द्वयं यत्परम् ॥ ५३ ॥

बुद्धया ब्रह्माहमित्येवविद्धि यतएवं अतइदंप्रतीयमानं देहादिप्रपंचं यत् स्वात्मतयागृहीतं तन्मृषामात्रंस्वप्नदृश्यवदसत्यमेव जहि त्यजेत्यर्थः५२ तत्वमसीतिवाक्ये मृद्घटदृष्टांतमाह मृत्कार्यमिति– मृदआहितंअध्यस्तंसकलंघटादिमृत्कार्यं सततं आदिमध्यावसानेषु मृण्मात्रमेव दृष्टं न

 ततः पृथक् तद्वतसज्जनितं सतोब्रह्मणउत्पन्नं सदात्मकंसतिअवस्थितं इदंसर्वंदेहादिब्रह्मलोकान्तं सन्मात्रमेव नततः पृथक् यस्मातसतः 
परंभिन्नंकिमपिनास्ति अतस्ततसदेवसत्यम् सएवात्मास्वयं तस्मात्कारणातूत्वमपि यत्प्रशान्तंअमलंनिर्मलंअद्वयंपरंब्रह्मतदसि न ब्रह्मणः
॥४३॥ पृथगित्यर्थः ॥ ५३ ॥ यथानिद्राकल्पितदेशकालादिकं मिथ्या तथाइहजाग्रत्यपिदृश्यमानंजगत् स्वाज्ञानकार्यत्वान्मिथ्यैव यस्मातूएवं इदं 



निद्राकल्पितदेशकालविषयज्ञात्रादि सर्वं यथा मिथ्या तद्वदिहापि जाग्रति जगत् स्वा-
ज्ञानकार्यत्वतः ॥ यस्मादेवमिदं शरीरकरणप्राणाहमाद्यप्यसत्तस्मातत्त्वमसिप्रशान्तममलं
ब्रह्मा द्वयं यत्परम् ॥ ५४ ॥ यत्र भ्रांत्या कल्पितं तद्विवेके तत्तन्मात्रं नैव तस्माद्विभिन्नम्॥
स्वप्ने नष्टं स्वप्नविश्वं विचित्रं स्वस्माद्भिन्नं किन्नु दृष्टं प्रबोधे ॥५४॥

शरीरेन्द्रियप्राणाहमादिकंअसन्मिथ्यैव तस्मात्त्वंप्रशान्तंअमलंअद्वयं यत्परंब्रह्मतदसीतियोजना ॥५४॥ अत्रैवस्वप्नदृष्टान्तमाह यत्रेति- यत्र
शुक्त्यादौ भ्रांत्याकल्पितंरजतादिकं तद्विवेकेशुक्तिज्ञानेततूरजतादिकंतन्मात्रं शुक्तिमात्रं तस्माच्छुक्त्यादेर्भिन्नंनैवास्ति यथाचस्वप्ने दृष्टंस्व- ॥४३॥
प्नएवनष्टंच ततूस्वस्मातूस्वप्नद्रष्टृनराद्भिन्नं प्रबोधेजाग्रदवस्थायांकिंनुदृष्टं किंतु न दृष्टमेव अतः स्वप्नकार्यंभृत्यादिमिथ्यैव ॥ ५५ ॥

अत्रजात्यादीनांकल्पितत्वमाह जातीति– तद्ब्रह्म त्वमसीति मदुक्तमात्मनिचित्तेभावय धारयेति कीदृशंतदित्यतआह जात्यादिरहितं नामादिवर्जितं यत्देशकालविषयान्अतिक्रम्यवर्ततेतदिति॥५५॥तस्यवागाद्यगोचरत्वमाह यदिति–यत्परंब्रह्म सकलवाचामगोचरं वाग्विषयंन भवति वाक्यदंसर्वेन्द्रियोपलक्षणं तेनसर्वेन्द्रियविषयंनभवतीत्यर्थः किंचनिर्मलज्ञानचक्षुषोर्विषयंभवति यत्शुद्धंचैतन्यघनं अनादिसिद्धं

जातिनीतिकुलगोत्रदूरगं नामरूपगुणदोषवर्जितम्॥ देशकालविषयातिवर्तियत् ब्रह्म तत्त्व मसि भावयात्मनि ॥५५॥ यत्परं सकलवागगोचरं ; गोचरं विमलबोधचक्षुषः ॥ शुद्धचिद्घन मनादि वस्तु यद्ब्रह्म तत्त्वमसि भावयात्मनि ॥ ५६ ॥ षड्भिरूर्मिभिरयोगियोगिहृद्भावितं न करणैर्विभावितम्॥वुद्ध्यवेद्य मनवद्य मस्ति यत् ब्रह्म तत्त्व मसि भावयात्मनि ॥ ५७ ॥

वस्तु तत्त्वंब्रह्मासीति॥ ५६ ॥ एवमग्रेपि तत्त्वमसिवाक्यलक्षितब्रह्मस्वरूपमाह षड्भिरित्यष्टभिःश्लोकैः—यद्ब्रह्म षड्र्मिभिर्देहप्राणमनोविकारै र्जरामृत्युक्षुत्पिपासारागद्वेषैरयोगिसंबंधरहितं तथायोगिभिर्हृदिध्यातं यत्करणैरिन्द्रियैर्न विभावितम् न विषयीकृतं बुद्ध्या न बुद्ध्यते यत्सक-

लदोषरहितं तत्त्वमसीति ॥ ५७ ॥ भ्रांतिकल्पिता या जगत्कला जगत्कल्पना तस्याअधिष्ठानभूतंयत् तथास्वाश्रयंआश्रयांतरापेक्षारहितं का-
र्यकारणाभ्यांविलक्षणं निष्कलंवृद्धिहानिरहितं यदुपमानंनविद्यते तत्त्वंब्रह्मासीति ॥ ५८ ॥ यद्ब्रह्म जन्मवृद्धिपरिणामहानिव्याधिनाशन
॥ ४४ ॥ विहीनं व्ययरहितंचविश्वस्य सृष्टिलयकारणं तत्त्वंब्रह्मासीति आत्मनिमनसिचित्तेधारयनिश्चिनु इत्यर्थः ॥ ५९ ॥ यद्अस्तभेदं भेदरहितं अ- अ०

भ्रांतिकल्पितजगत् कलाश्रयं स्वाश्रयं च सदसद्विलक्षणम् ॥ निष्कलं निरुपमानवद्धि यत् ४
ब्रह्म तत्त्वमसि भावयात्मनि ॥ ५८ ॥ जन्मवृद्धिपरिणत्यपक्षयव्याधिनाशनविहीनमव्ययम्॥
विश्वसृष्ट्यवविघातकारणं ब्रह्म तत्त्व मसि भाव यात्मनि ॥ ५९ ॥ अस्तभेद मनपास्तलक्षणं
निस्तरंगजलराशिनिश्चलम् ॥ नित्यमुक्तमविभक्तमूर्ति यत् ब्रह्म तत्त्वमसि भावयात्मनि ॥ ६० ॥

नपास्तलक्षणं नअपास्तं विगतंलक्षणंस्वरूपंयस्यतत् अपरिणामिस्वरूपं निस्तरंगजलराशिनिश्चलंतरंगरहितसमुद्रवन्निश्चलं नित्यमुक्तंसदा- ॥ ४४ ॥
मुक्तं यच्चअविभक्तमूर्ति त्रिविधपरिच्छेदरहितं तत्त्वंब्रह्मासीति ॥ ६० ॥ स्वयमेकमेवसत् माययातुअनेकानांवियदादीनांकारणं तथाकार-

णांतरनिरासि कारणान्तरनिरासकर्तृ स्वयमकारणम् कारणरहितं तथाकार्यकारणाभ्यांविलक्षणं यत्साक्षिभूतं तद्ब्रह्मासीति भावयेति ॥
॥ ६१ ॥ निर्विकल्पकं सकलविकल्परहितं अनल्पं विभु अक्षारंहानिरहितं यद्ब्रह्मक्षाराक्षारविलक्षणं क्षेत्रक्षेत्रज्ञाभ्यांविलक्षणं शुद्धंसर्वतः

एक मेव स दनेककारणंकारणांतरनिरास्य कारणम् ॥ कार्यकारणविलक्षणं स्वयं ब्रह्म तत्व-
मसि भावयात्मनि ॥६१॥ निर्विकल्पक मनल्प मक्षरं य तक्षराक्षरविलक्षणं परम् ॥ नित्य
मव्ययसुखं निरंजनं ब्रह्म तत्व मसि भावयात्मनि ॥ ६२ ॥ य द्विभाति स दनेकधा भ्रमा
न्नामरूपगुणविक्रियात्मना ॥ हेमव त्स्वय मविक्रियं सदा ब्रह्म तत्व मसि भावयात्मनि॥६३॥
य च्चकास्त्य नपरं परात्परं प्रत्यगे करस मात्मलक्षणम् ॥ सत्यचित्सुख मनंत मव्ययं ब्रह्म
तत्त्व मसि भावयात्मनि ॥ ६४ ॥

परंनित्यं अव्ययसुखं निरतिशयानंदरूपंनिरंजनं मायाकृतदोषरहितं तद्ब्रह्मासीतिभावय ॥ ६२ ॥ यत्स्वयं हेमवत्सदाविकाररहितंसत्
भ्रमात्नामरूपगुणविक्रियात्मना कटककुंडलादिवदनेकधा अनेकरूपंभाति तत्त्वंब्रह्मासीतिभावय ॥ ६३ ॥ यद् अनपरं नपरोयस्मात्तदिति

चकास्तिप्रकाशते तथापरात्अव्यक्तादपिपरं प्रत्यक्सर्वसाक्षि एकरसंचिद्रूपं आत्मलक्षणंत्रिविधभेदशून्यं तथासत्यज्ञानानंदस्वरूपं अनं-
तंदेशकालकृतान्तररहितं अविनाशिचतद्ब्रह्मासीतिआत्मनिभावय ॥ ६४ ॥ भावार्थमाह उक्तमिति- इमंपूर्वश्लोकैरुक्तं अर्थंतात्पर्यं आ-
त्मनिबुद्धौस्वयंभावयेत् प्रसिद्धयुक्तिभिर्बुद्धैयवनिश्चितंकुर्यात् कथंकरस्थजलव त्संशयादिरहितंकुर्यात् तेनतत्वस्यनिश्चयोभविष्यति ॥ ६५ ॥



उक्त मर्थ मिम मात्मनि स्वयं भावये त्प्रथितयुक्तिभि र्धिया ॥ संशयादिरहितं कराम्बुव त्तेन तत्त्वनिगमो भविष्यति ॥६५॥ सम्बोधमात्रं परिशुद्धतत्वं विज्ञाय संघे नृपवच्च सैन्ये ॥ तदाश्रयः स्वात्मनि सर्वदा स्थितो विलापय ब्रह्मणि विश्वजातम् ॥६६॥ बुद्धौ गुहायां सदसद्विलक्षणं ब्रह्मास्ति सत्यं परमद्वितीयम् ॥ तदात्मनायोत्रवसे द्गुहायां पुनर्न तस्याङ्ग गुहाप्रवेशः ॥६७॥

बोधप्रकारमाह संवोधमात्रमिति संवोधमात्रं केवलज्ञानस्वरूपं परिशुद्धतत्त्वं निरुपाध्यात्मतत्त्वं विज्ञाय संघे देहादिसमुदाये सैन्ये राजा-
नमिव तस्यदेहादिसंघस्याश्रयआधारभूतः त्वं आत्मनिब्रह्मणिसर्वदास्थितः सन्सर्वंविश्वजातं ब्रह्मभावचिंतनेन ब्रह्मणिविलापय अहंब्रह्मैव
सर्वमितिभावयेत्यर्थः ॥ ६६ ॥ ब्रह्मभावनास्थानमाह बुद्धाविति- बुद्धिरूपायांगुहायां कार्यकारणविलक्षणं तत्साक्षिभूतं सत्यमद्वितीयं परं



T

ब्रह्मास्ति तदात्मनाब्रह्मात्मना योविद्वानत्रगुहायांवुद्धौवसेत् वुद्धिप्रतिविंवितचिदाभासात्मभूतंविम्बरूपंआत्मानंभावयेत् हेअंगहेशिष्य तस्यपुरुषस्य पुनर्गुहाप्रवेशः वुद्धितादात्म्यपूर्वकोजन्ममरणादिलक्षणःसंसारो नभवतीत्यर्थः ॥ ६७ ॥ आत्मनिष्ठाकारणीभूतनिदिध्यासनप्रकारमाह ज्ञातयिति- उक्तप्रकारेण वस्तुनिब्रह्मणिज्ञातेपि एषाअनादिकालिकाकर्ताभोक्तापिअहमस्मीति दृढावासनावलवतीअस्ति या-

ज्ञाते वस्तुन्यपि वलवती वासना नादि रेषा कर्ता भोक्ताप्यहमिति दृढा यास्य संसारहेतुः ॥
प्रत्यग्दृष्ट्या त्मनि निवसता सापनेया प्रयत्ना न्मुक्तिं प्राहु स्तदिह मुनयो वासनातानवं यत् ६८
अहं ममेतियो भावो देहाक्षादा वनात्मनि॥ अध्यासो यं निरस्तव्यो विदुषा स्वात्मनिष्ठया६९॥

वासनाअस्यजीवस्यसंसारहेतुः जन्ममरणादिदुःखदा सा वासनाप्रत्यग्दृष्ट्या साक्षिभूतात्मतादात्म्यदृष्ट्या आत्मनिनिवसता आत्मस्वरूपेणतिष्ठता निदिध्यासनपरेण सा वासना अपनेयाप्रयत्नान्निवारणीया इहदेहादौयद्वासनातानवं वासनाक्षयः तदेवमुक्तिमाहुर्मुनयः ॥ ६८ ॥ स्वात्मनिष्ठयाध्यासोनिरस्तव्यइत्याह अहंमिति- अनात्मनि जडेदेहेंन्द्रियादौ योअहंममेतिभावः अयमेवाध्यासः स च विदुषा स्वात्म-

 निष्ठयानिरस्तव्यः त्याज्यइत्यर्थः ॥ ६९ ॥ देहादावनात्मनि आत्मवुद्धित्यागप्रकारमाह ज्ञात्वेति- प्रत्यगात्मानं वुद्धिसाक्षिणं वुद्धिवृत्ति- 
साक्षिणं स्वंस्वरूपंज्ञात्वा निश्चित्य सोहमस्मीति सद्वृत्याआत्माकारवृत्या अनात्मनिदेहादौआत्ममतिं ब्राह्मणोहं गौरोहं कर्ताभोक्ताह
 मित्यात्ममतिं जहित्यजेत्यर्थः ॥ ७० ॥ लोकव्यवहारः देहधारणव्यवहारः शास्त्राभ्यासव्यवहारश्च यथोपयोगमेवकार्योनाधिक इत्याह 
लोकेति- लोकानुवर्तनं लौकिकव्यवहारेप्रवृत्तिं स्वागतादिरूपामपिसर्वथात्यक्त्वा तथादेहानुवर्तनम् देहधारणमात्रोपयोगि भोजनाच्छा- 

ज्ञात्वा स्वं प्रत्यगात्मानं बुद्धितद्वृत्तिसाक्षिणम्॥सोहमित्येवसद्वृत्या नात्मन्यात्ममतिं जहि॥७०॥
लोकानुवर्तनं त्यक्त्वा त्यक्त्वा देहानुवर्तनम् ॥ शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु ॥७१॥
लोकवासनया जन्तोः शास्त्रवासनया पि च ॥ देहवासनया ज्ञानं यथावन्नैव जायते ॥ ७२ ॥

दनादिभ्योधिकदेहलालनप्रवृत्तिं शास्त्रानुवर्तनंस्वपांडित्यबोधनार्थं आत्मज्ञानोपयोगिशास्त्राधिकशास्त्रप्रवृत्तिं "त्यक्त्वा "देहादौस्वाध्यासस्य
स्वशब्दस्यात्मात्मीयवाचकत्वात् आत्मात्मीयाध्यासस्य तत्राहङ्कारादावात्माध्यासः देहेन्द्रियादौआत्मोत्मीयरूपोद्विविधोध्यासः स्त्रीपुत्र- 
गृहादौचात्मीयाध्यास स्तस्यसर्वविधस्याध्यासस्य अपनयं निवर्तनं कुर्वित्यर्थः ॥ ७१ ॥ वासनात्यागाभावेदोषमाह लोकेति- जन्तो र्जी-

वस्य लोकशास्त्रदेहवासनाभिर्व्यग्रचितस्य यथावज्ज्ञानंनैवजायते नोत्पद्यतइत्यर्थः ॥७२॥ वासनात्रयस्यसंसारबंधहेतुत्व मित्याह संसारेति– संसारकारागृहे बंधहेतुभूतं तज्ज्ञाःबंधमोक्षज्ञाः लोकशास्त्रदेहवासनारूप मेतत् पटुवासनात्रयं बंधनेनिपुणतरंवासनात्रयं अयोमयं लोह- मयं पादनिबंधशृंखलंवदंति यतः संसारकारागृहमोक्षमिच्छोः मोक्षमिछतएतत्त्रयमेव पादबंधनवत्प्रतिबंधकंभवति ।तस्मात्योऽस्माद्वास-

संसारकारागृहमोक्षमिच्छो रयोमयं पादनिवन्धशृंखलम् ॥ वदंति तज्ज्ञाः पटु वासनात्रयं
योस्मा द्विमुक्तः समुपैति मुक्तिम् ॥७३॥ जलादिसंसर्गवशा त्प्रभूतदुर्गन्धधूता गुरुदिव्यवासना॥
संघर्षणेनैव विभाति सम्य ग्विधूयमाने सति वाह्यगन्धे ॥७४॥ अंतःश्रितानंतदुरंतवासनाधूली
विलिप्ता परमात्मवासना ॥ प्रज्ञातिसंघर्षणतो विशुद्धा प्रतीयते चंदनगंधवत्स्फुटम् ॥ ७५ ॥

नात्रयाद्विमुक्तः समुक्तिमुपैति प्राप्नोतीत्यर्थः ॥ ७३ ॥ वासनाच्छादितात्मतत्वेदृष्टान्तमाह जलादीति– यथाअगुरोसुगंधिकाष्टस्य दिव्यवासना अतिप्रियः सुगंधः जलादिसंबंधवशात्प्रभूतः उत्पन्नोयोदुर्गंध स्तेनधूता आच्छादितासती लोहादिनासंघर्षणेनो परिस्थमलनिवारणेन वाह्य- दुर्गंधनिवारणेनां तरस्थासुगन्धवासना विभातिप्रकटीभवति ॥७४॥ एवं अंतःश्रिताअंतःकरणेस्थिता याअनंताअसंख्यता दुरंतादुर्निवार्यावासना

एवधूलीरूपा स्ताभिर्विलिप्ता आच्छादिता परमात्मवासना परमात्मस्मृतिरूपा नभातिसापरमात्मवासना प्रज्ञातिसंघर्षणतः आत्मविचारात्यंताभ्यासतो विशुद्धानिर्मला कृष्णचंदनगंधवत्स्फुटंप्रतीयते आत्मनिस्फुटीभवतीत्यर्थः ॥ ७५ ॥ दुर्वासनानिवारणेआत्मनिष्ठाशक्तेत्याह अनात्मेति– अनात्मनां देहादीनां यावासना हृदिसंस्कारविशेषा तत्स्मृतिहेतव स्तासांजालैः समुदायैः आत्मवासना आत्मस्मृतिहेतुभूत-

अनात्मवासनाजालै स्तिरोभूता त्मवासना ॥ नित्यात्मनिष्ठया तेषां नाशे भाति स्वयं स्फुटम् ॥ ७६ ॥ यथायथा प्रत्यगवस्थितं मन स्तथा तथा मुंचति वाह्यवासनाम् ॥ निःशेषमोक्षे सति वासनाना मात्मानुभूतिः प्रतिबंधशून्या ॥ ७७ ॥

सस्कारविशेषरूपा साच तिरस्कृता आच्छादितानभाति नित्यंप्रतिक्षणं आत्मनिष्ठया आत्मानुसन्धानरूपया तेषामनात्मवासनाजालानां नाशेसति सात्मवासना स्वयंस्फुटंअतिप्रकटतयाभातीति ॥ ७६ ॥ निष्ठाभ्यासाधिक्ये फलमाह यथेति– इदंमनो यथायथाप्रतीचिस्वात्मस्वरूपभूतसाक्षिणि स्थितंभवति तथातथावाह्यानांअात्मातिरिक्तानां देहधनपुत्रादीनां वासनांतत्स्मृतिहेतुभूतां मुंचतितयजति एवमा- 

त्मनिष्ठयाइतरवासनानांनिशेषमोक्षे सर्वथानिवृत्तौ तदा न्यवासनाप्रतिबंधशून्या आत्मानुभूतिरेव निरंतराभवति ॥ ७७ ॥ आत्मनिमनः स्थितिंकृत्वा ध्यासंनिवारयेत्याह स्वात्मनीति—हेशिष्ययोगिनआत्मनिष्ठस्यपुरुषस्य मनःअंतःकरणं सदानिरंतरंस्वात्मन्येवस्थित्वानश्यति संकल्पात्मकंस्वभावंत्यजति अतःसंकल्पत्यागात् वासनानांक्षयोभवति तस्मात्मनःसंकल्पहेतुभूतस्यात्मस्थितिप्रतिबंधकस्यस्वाध्यासस्य देहादावहंबुद्धेः अपनयंनिवृत्तिंकुरु अध्यासस्यैवसकलोपद्रवमूलत्वादित्यर्थः ॥ ७८ ॥ अध्यासत्यागप्रकारमाह तमइति— रजोगुणसत्वगु-

स्वात्मन्येव सदा स्थित्वा मनो नश्यति योगिनः॥ वासनानां क्षय श्चातः स्वाध्यासापनयंकुरु ७८

तमो द्वाभ्यां रजः सत्वा त्सत्वं शुद्धेन नश्यति॥ तस्मा त्सत्व मवष्टभ्य स्वाध्यासापनयं कुरु ॥७९॥

प्रारब्धं पुष्पति वपु रिति निश्चित्य निश्चलः॥ धैर्य मालंव्य यत्नेन स्वाध्यासापनयं कुरु ॥८०॥

णयोः सेवनात्तमोगुणोनश्यति सत्वसेवनात्रजोनश्यति शुद्धेनसत्वेनज्ञानसुखाद्यभिमानशून्येन सत्वंसत्वाभिमानंनश्यति तस्मात्कारणात् सर्वाभिमानशून्यसात्विकनिष्ठामाश्रित्य स्वाध्यासापनयं स्वकीयाध्यासस्यकर्तृत्वादिरूपस्यनिवृत्तिंकुरु ॥ ७९ ॥ अध्यासनिवारणे युक्तिमाह प्रारब्धमिति— वपुःशरीरंतु प्रारब्धमेवपुष्यतिपालयति इतिनिश्चयंकृत्वानिश्चलः. शरीरपोषणादिव्यापाररहितः यत्नेनचित्तवृत्तिनिरोधेन

 धीरतांप्राप्य स्वकीयाध्यासस्याहंकारादे रपनयंनिवृत्तिंकुरु ॥ ८० ॥ अत्रैवप्रकारांतरमाह नाहमिति— अतद्रूपाणामनात्मरूपाणां बुद्ध्या 
दिब्रह्मलोकपर्यंतानां याव्यावृतिर्निवृतिरात्मरूपाद्भिन्नतयातद्वासनात्याग स्तत्पूर्वकंनाहंजीवः किन्तुब्रह्मैवेतिनिश्चित्य वासनावेगतःप्राप्तो
 यःस्वाध्यासःस्वस्यदेहादावध्यासः देहधर्माणामात्मनिअभिमान स्तस्यापनयंनिवृत्तिं कुर्वित्यर्थः ॥ ८१ ॥ युक्त्यंतरमाह श्रुत्येति— श्रु- 

नाहं जीवः परं ब्रह्मे त्यतद्व्यावृतिपूर्वकम् ॥ वासनावेगतः प्राप्तस्वाध्यासापनयं कुरु ॥ ८१ ॥
श्रुत्या युक्त्या स्वानुभूत्या ज्ञात्वा सार्वात्म्यमात्मनः॥क्वचिदाभासतःप्राप्तस्वाध्यासापनयंकुरु८२
अनादानविसर्गाभ्या मीष न्नास्ति क्रिया मुने॥ तदेकनिष्ठया नित्यं स्वाध्यासापनयं कुरु ॥ ८३ ॥

त्यासर्वंखल्विदंब्रह्मेति युक्त्यामृद्घटादिदृष्टांतेन जाग्रदादौआत्मनोऽन्वयः जाग्रदादीनांचात्मनिसुषुप्त्यादौव्यतिरेक इत्यवस्थात्रये स्व-
स्यानुभवेनचात्मनः सर्वरूपतांज्ञात्वा क्वचित्सृष्ट्यादौ जाग्रत्स्वप्नयोश्च आभासतोभ्रमतः प्राप्तस्य स्वाध्यायस्य निवृतिंकुर्वित्यर्थः ॥ ८२ ॥ 
मुने मननशीलस्य मनसाविषयग्रहणत्यागाभावाभ्यां अन्याक्रिया अध्यासवारणीभूतानास्ति अतस्तदेकनिष्ठयाग्रहणत्यागनिवृत्तिरूपया

क्रिययानिस्सङ्कल्पतया निरंतरंयास्थितिः तया स्वाध्यासनिवृत्तिं कुरु सङ्कल्पस्यैवाध्यासहेतुत्वात् ॥ ८३ ॥ किंच तत्वमस्यादिवाक्योत्थः तद्वाक्यश्रवणादिजन्योयो ब्रह्मात्मैकत्वबोधस्तस्मादुत्पन्नं यद्ब्रह्मणिआत्म्यत्वंतादात्म्यं तस्यदार्ढ्याय स्थिरत्वायस्वाध्यासनिवृत्तिं कुरु निदिध्यासनेनविपरीतभावनानिवृत्तिंकुर्वित्यर्थः ॥ ८४ ॥ सावधानेन सावधानतयायुक्तात्मा उपरतचित्तः अस्मिन्देहेअहंभावस्यनिःशेष-

तत्वमस्यादिवाक्योत्थब्रह्मात्मैकत्वबोधतः ॥ ब्रह्मण्यात्मत्वदार्ढ्याय स्वाध्यासापनयं कुरु ॥८४॥
अहंभावस्य देहेस्मिन्निःशेषविलयावधि ॥ सावधानेन युक्तात्मा स्वाध्यासापनयं कुरु ॥ ८५ ॥
प्रतीतिर्जीवजगतोः स्वप्नवद्भाति यावता ॥ तावन्निरन्तरं विद्वन्स्वाध्यासापनयं कुरु ॥ ८६ ॥
निद्राया लोकवार्तायाः शब्दादेरपि विस्मृतेः॥ क्वचिन्नावसरं दत्वा चिन्तयात्मानमात्मनि ॥८७॥

विलयपर्यंतं स्वाध्यासनिवृत्तिं कुरु ॥ ८५ ॥ हेविद्वन् जीवजगतोःप्रतीतिः यावताकालेन स्वप्नवत्मिथ्यास्यात् तावत्कालं निरंतरंस्वाध्यासनिवृत्तिं कुरु ॥ ८६ ॥ देहप्राणमतीन्द्रियेषु निखिलस्वात्मीयभावे गते तत्साक्षी तदभावदृग्रविनिभः स्वात्म्यैव संशिष्यते॥ तत्तादात्म्यबलाज्जलार्कसदृशाभासेभिमानं त्यजेत्युक्तं सद्गुरुणा विवेकक्रमणो तुर्याभिधेऽध्यायके ॥ इति श्रीजगाधरीनगरस्थसारस्वतवंशावतंस

श्रीमन्मिश्रहरिधनपुरोहितात्मजवेदान्तनिष्ठपण्डितहरिनामदत्तविरचितायांविवेकचूडामणिटीकायांसुबोधिन्याम् संसक्तिनिरूपणोनामचतुर्थोध्यायः ॥ ४ ॥ आत्मचिंतनप्रकारमाह निद्रायाइति– निद्राया आत्मचिंतनेप्रतिबंधिकायाः लोकवार्तायाश्च सर्वदाविघ्नरूपायाः शब्दादेः शब्दश्रवणादेः सकलेंद्रियविषयाणां स्मृतेः आत्मचिंतनविस्मृतेश्च क्वचिदपि अवसरंअवकाशंनदत्वा आत्मनिहृदये आत्मानंसाक्षिणं सोहमस्मीति विचिंतयेत्यर्थः ॥ ८७ ॥ देहस्य मलिनत्वादप्यध्यासः त्याज्यइत्याह मातेति– मातापित्रोर्मलात् रजोवीर्यरूपात्समुत्पन्नं

मातापित्रोर्मलोद्भूतं मलमांसमयं वपुः ॥ त्यक्त्वा चाण्डालवद्दूरं ब्रह्मीभूय कृती भव ॥ ८८ ॥

घटाकाशं महाकाश इवात्मानं परात्मनि ॥ विलाप्याखण्डभावेन तूष्णीं भव सदा मुने ॥ ८९ ॥

स्वप्रकाशमधिष्ठानं स्वयं भूय सदात्मना ब्रह्माण्डमपि पिण्डाण्डं त्यज्यतां मलभाण्डवत् ॥ ९० ॥

मलमांसमयं मलपूर्णं मांसाच्छादितंवपुः शरीरंचांडालवद्दूरंत्यक्त्वातत्राभिमानंत्यक्त्वाआत्मानं ब्रह्मरूपं निश्चित्यकृतीकृतार्थोभवेत्यर्थः ॥ ८८ ॥ अध्यासस्यमिथ्यात्वादात्मनिष्ठोभवेत्याह घटेति– हेमुने यथाघटाकाशो घटेनष्टे महाकाशे विलीयते एवमात्मानं देहाद्यध्यासत्यागेन परमात्मनि विलाप्य विवेकदृष्ट्यैक्यं संभाव्य सदात्मरूपः सन् तूष्णींभव ॥ ८९ ॥ आत्मनिष्ठाप्रकारमाह चतुर्भिः ततः किंकार्यमित्यत आह स्वप्रकाशमिति– ततःसदात्मना ब्रह्मात्मना स्वप्रकाशंसर्वाधिष्ठानं स्वयंभूय सकलंब्रह्माण्डमपि पि- ॥ ४९ ॥

ण्डाण्डं परिपूर्णात्मापेक्षयाखगांडवदल्पं मलिनं च संभाव्य मलभाण्डवत्त्यज्यताम् तदभिलाषोंनिवार्यतामित्यर्थः ॥ ९० ॥ किंच देहारूढां अहंधियं देहोहमितिबुद्धिं सदानंदस्वरूपे चिदात्मनि निवेश्यस्थिरांकृत्वा लिंगशरीरे बुद्धींद्रियप्राणमयेपि अभिमानं त्यक्त्वा सर्वदाकेवलः आनंदैकब्रह्मरूपो भवेत्यर्थः ॥ ९१ ॥ किंच एषजगदाभासः जगत्प्रतीतिर्यत्रयस्मिन्अधिष्ठाने माययाप्रतीयते यथादर्पणान्तर्गतंपुरं नग-

चिदात्मनि सदानंदे देहारूढामहंधियम् ॥ निवेश्य लिंगमुत्सृज्य केवलो भव सर्वदा ॥ ९१ ॥
यत्रैष जगदाभासो दर्पणांतःपुरं यथा ॥ तद्ब्रह्माहमिति ज्ञात्वा कृतकृत्यो भविष्यसि ॥ ९२ ॥
यत्सत्यभूतं निजरूपमाद्यं चिदद्वयानंदमरूपमक्रियम् ॥ तदेत्य मिथ्यावपुरुत्सृजेत शै-
लूषवद्वेषमुपात्तमात्मनः ॥ ९३ ॥

रंदर्पणेप्रतीयते अविद्यमानमपिदर्पणसत्तयाभाति तत्सर्वाधिष्ठानभूतं रजताधिष्ठानभूतमिवशुक्तिखंडं सत्यं ब्रह्माहमस्मीति ज्ञात्वा कृता-र्थोभविष्यसि इत्यर्थः ॥ ९२ ॥ किंच यत्सत्यभूतं सत्यस्वरूपं आद्यम्अनादिसिद्धं निजरूपंचिदद्वयानंदं स्वतस्स्वरूपं नामरूपरहितं अक्रियं अचलमित्यर्थः तत्स्वरूपं एत्यप्राप्य मिथ्यावपुर्देहाद्यभिमानं उत्सृजेत त्यजेत शैलूषवत् नटवत्। यथानटः कृत्रिमरूपं धृत्वा तत्कार्यं कृत्वा

कृत्रिमरूपंत्यजति स्वरूपेणावस्थितोभवति तद्वत् ॥ ९३ ॥ अहंकारस्य क्षणिकत्वान्नसर्वज्ञत्वमित्याह सर्वात्मेति— किंचेदं दृश्यं सर्वात्मना मृषैव अहमर्थोपि आत्मानभवति अहमर्थस्यक्षणिकत्वदर्शनात् अहंसर्वंजानामीति प्रतीतिर्ज्ञानं क्षणिकस्याहमादेः कुतः सिद्ध्येत् नकथमपि इत्यर्थः ॥ ९४ ॥ अहंशब्दस्यलक्ष्यार्थस्तु साक्षिरूपइत्याह अहमिति— ननुअहंकारस्यक्षणिकत्वे ब्रह्माहमस्मीतिबोधः कथंस्यादित्यत-



सर्वात्मना दृश्यमिदं मृषैव नैवाहमर्थः क्षणिकत्वदर्शनात् ॥ जानाम्यहं सर्वमिति प्रतीतिः कुतोहमादेः क्षणिकस्य सिद्ध्येत् ॥ ९४ ॥ अहंपदार्थस्त्वहमादिसाक्षी नित्यं सुषुप्तावपि भावदर्शनात् ॥ ब्रूते ह्यजो नित्य इति श्रुतिः स्वयं तत्प्रत्यगात्मा सदसद्विलक्षणः ॥९५॥ विकारिणां सर्वविकारवेत्ता नित्याविकारो भवितुं समर्हति॥ मनोरथस्वप्नसुषुप्तिषु स्फुटं पुनः पुनर्दृष्टमसत्वमेतयोः ॥ ९६ ॥

आह अहमितिअहंब्रह्मास्मीति अहंपदार्थस्तु शुद्धाहंकारे लक्ष्येस्ति प्रमादरूपाहमादीनांसाक्षी आत्मैवसुषुप्तावपि सुखमहमस्वाप्समिति तद्भावदर्शनात् यंआत्मानं श्रुतिः अजोनित्यइतिस्वयंब्रूते तत्तस्मात् आत्मासदसद्विलक्षणः कार्यकारणसाक्षीप्रत्यग्रूपइति ॥ ९५ ॥ विकारिविकारद्रष्टृत्वादात्मनोऽविकारित्वमाह विकारिणामिति— यस्मादयमात्मा विकारिणांबुद्ध्यादीनां सर्वविकाराणां कर्तृत्वभोक्तृत्वादीनां-

वेत्ता अतएवनित्यः सर्वदाअविकारः विकाररहितो भवितुमर्हति योग्योभवति एतयोः कार्यकारणयोः मनोरथस्वप्नसुषुप्तिषु असत्वं अभावः पुनःपुनः स्फुटंदृष्टमिति साक्षिरूपएवात्मासनातनइति ॥ ९६ ॥ कल्पितेभिमानंत्यक्त्वा साक्षिनिष्ठोभवेत्याह अतइति- यतएवं बुद्ध्यादावभिमानोमिथ्या दुःखदश्च अतोमांसपिण्डेदेहे अभिमानंत्यज पिंडाभिमानिनि प्रमातर्यपि बुद्धिकल्पिते अभिमानंत्यज नाहंकर्त्तेति ततः सर्वसाक्षिणंस्वात्मानं कालत्रयाबाध्यं अखण्डबोधंज्ञात्वा शांतिमुपैहि प्राप्नुहीत्यर्थः ॥ ९७ ॥ देहधर्मेष्वप्यभिमानं त्यजेत्याह त्यजेति-

अतोभिमानं त्यज मांसपिण्डे पिंडाभिमानिन्यपि बुद्धिकल्पिते ॥ कालत्रयाबाध्यमखण्डबोधं ज्ञात्वा स्वमात्मानमुपैहि शांतिम् ॥ ९७ ॥ त्यजाभिमानं कुलगोत्रनामरूपाश्रमेष्वार्द्रशवाश्रितेषु ॥ लिंगस्य धर्मानपि कर्तृतादींस्त्यक्त्वा भवाखण्डसुखस्वरूपः ॥ ९८ ॥ संत्यन्ये प्रतिबंधाः पुंसः संसारहेतवो दृष्टाः ॥ तेषामेवंमूलं प्रथमविकारो भवत्यहंकारः ॥ ९९ ॥

देहादावात्माभिमानेऽपसारिते तदादेहोयं शवतुल्योभवति अत आर्द्रशवाश्रितेषु आर्द्रशवतुल्येदेहेआश्रिताः स्थितायेकुलगोत्रनामरूपाश्रमाः तेषांकुलगोत्रनामरूपाश्रमाणां देहधर्मत्वात्तेष्वभिमानं त्यज तथाकर्तृत्वादीन् लिंगशरीरस्यधर्मानपि त्यक्त्वा आत्मनिष्ठःसन् अखण्डसुखस्वरूपोभवेति योजना ॥ ९८ ॥ अहंकारस्य सर्वोपद्रवमूलत्वमित्याह संतीति- यद्यपि पुंसः मुक्तौ प्रतिबंधभूताः संसारस्यहेतवो

अन्येपि कामसंकल्पादयो दुष्टाः संति तथापि तेषांसर्वेषांसंसारकारणानां एवंउक्तप्रकारेण मूलंकारणं अज्ञानस्यप्रथमविकारो अहंकारएव भवतीति ॥ ९९ ॥ अहंकारत्यागंविना मुक्तिर्नास्तीत्याह यावदिति– अनेनदुरात्मना अहंकारेण स्वस्य प्रमातुश्चिदाभासस्य यावत्कालं संबंधोभवति तावत्कालंमुक्तिवार्तापिनास्ति कुतः यतोमुक्तिवार्ता सर्वाध्यस्तविलक्षणा ॥ ३०० ॥ अहंकारनिवृत्तौ स्वरूपप्राप्तिरित्यत्रदृ-



यावत्स्यात्स्वस्यसंबंधोहंकारेणदुरात्मना ॥ तावन्न लेशमात्रापि मुक्तिवार्ताविलक्षणा ॥३००॥
अहंकारग्रहान्मुक्तः स्वरूपंप्रतिपद्यते ॥ चंद्रवद्विमलःपूर्णः सदानंदः स्वयं प्रभः ॥ १ ॥
योवापुरे सोहमितिप्रतीतो बुद्ध्याप्रक्लृप्तस्तमसातिमूढया ॥ तस्यैव निःशेषतया विनाशे
ब्रह्मात्मभावः प्रतिबंधशून्यः ॥ २ ॥

ष्टांतमाह अहंकारइति– अहंकाररूपोयोग्रहो गृह्णातिइतिग्रहः आच्छादकइत्यर्थः तस्मान्मुक्तोयं जीवात्मा स्वरूपंनिरुपाधिकस्वरूपं साक्षित्वंप्रतिपद्यते विस्मृतकण्ठमणिरिव स्मृतकंठमणिः सन् मणिमत्तामित्यत्रदृष्टांतो यथाराहुग्रहान्मुक्तश्चन्द्रः प्राप्तस्वरूपएव स्वरूपंप्रतिपद्यते तद्वद्विमलःनिर्मलः पूर्णअहंकारपरिच्छेदशून्यः सदानंदः स्वयंप्रभश्च भवतीत्यर्थः ॥ १ ॥ अत्रोपपत्तिमाह योवेति– योयम- ॥ ५१ ॥

हंकारः पुरेदेहेतमसातिमूढयाबुद्ध्याप्रक्लृप्तः रचितः सोहंदेवदत्तोहमिति आत्मत्वेनप्रतीतोदृष्टस्तस्यैवाहंकारस्य निःशेषतया विनाशेसति अस्यात्मनः ब्रह्मात्मभावः प्रतिबंधशून्यः अहंकाररूपप्रतिबंधरहितः स्पष्टतयाभातीतिशेषः ॥ २ ॥ अहंकारस्यात्मस्वरूपलाभप्रतिबंधकत्वे रूपकांतरमाह ब्रह्मानंदेति— ब्रह्मानंदनिधिर्गुप्तं महाधनं अहंकाररूपघोरसर्पेणात्मनि संवेष्ट्य रक्ष्यते पाल्यते कैस्त्रिभिर्गुणमयैः रजः-

ब्रह्मानंदनिधिर्महाबलवताहंकारघोराहिना संवेष्ट्यात्मनि रक्ष्यते गुणमयैश्चंडैस्त्रिभिर्मस्तकैः ॥ विज्ञानाख्यमहासिना श्रुतिमता विच्छिद्य शीर्षत्रयं निर्मूल्याहिमिमं निधिं सुखकरं धीरो नुभोक्तुं क्षमः ॥ ३ ॥ यावद्वा यत्किंचि द्विषदोषस्फूर्तिरस्ति चेद्देहे ॥ कथमारोग्याय भवेत्तद्वदहंतापि योगिनो मुक्त्यै ॥ ४ ॥

सत्वतमोमयैर्मस्तकैरतिविषयुक्तमुखस्थानीयैः पुरुषं मूढंकृत्वा रक्ष्यते तत्रबुद्धिमान् मुमुक्षुर्विज्ञाननाम्नामहाखड्गेन श्रुत्युक्तेनास्याहंकारसर्पस्य मूर्द्धत्रयं छित्वा इमंअहंकारसर्पं निर्मूल्य समूलंअज्ञानमूलेनसहितं निवार्य तदायं धीरः सुखकरंनिधिं ब्रह्मानंदसुखंभोक्तुंसमर्थोभवति ॥ ३ ॥ गुणानांविषतुल्यतामाह यावदिति— यथानिर्धिरक्षकसर्पनिवारणे प्रवृत्तस्य पुरुषस्यदेहे निधिरक्षकसर्पविषसंबंधो यावत्स्या-

त्तावदारोग्यताकथंस्यात् एवमस्याहंकारसर्पस्य गुणविषयुक्तस्य यावद्गुणविषस्फूर्तिःस्यात् तावदियमहंता शुद्धात्मविषयापि कथं मुक्त्यै स्यात् नकथमपीत्यर्थः ॥ ४ ॥ कथंतर्हिं मुक्तिरित्यतआह अहमइति– विषयाहंकारस्यात्यंतनिवृत्या सर्वथानिवृत्या तत्कृतानां नाना-विकल्पानां संहारेण शुद्धेचित्ते प्रत्यक्तत्वविवेकात् प्रतीचोजीवस्य तत्वंयथार्थस्वरूपं ब्रह्म तस्यविवेकात् अनात्मनोभिन्नतया ज्ञानात्

अहमोत्यंतनिवृत्या तत्कृतनानाविकल्पसंहृत्या ॥ प्रत्यक्तत्वविवेकादिदमहमस्मीति विंदते तत्वम् ॥ ५ ॥ अहंकारे कर्तर्यहमिति मतिं मुंच सहसा विकारात्म न्यात्मप्रति-फलजुषि स्वस्थितिमुषि ॥ यदध्यासात्प्राप्ता जनिमृतिजरादुःखबहुला प्रतीचश्चिन्मूर्ते स्तव सुखतनोः संसृतिरियम् ॥ ६ ॥

इदं चिद्रूपंब्रह्माहमस्मीतितत्वं रूपंविंदतेजानातीत्यर्थः ॥ ५ ॥ तदामुमुक्षोः कर्तव्यतामाह अहंकारइति– कर्त्तातुअहंकारएव नात्मा कर्त-रिअहंकारे विकारात्मनिविकारस्वरूपेऽस्मिन् अहमितिमतिंबुद्धिं सहसाशीघ्रंत्यक्त्वा कथंभूते आत्मनश्चैतन्यरूपस्य यत्प्रतिफलंप्रतिबिंबं तज्जु-षि तद्युक्ते इति। पुनःकथंभूते स्वस्थितिमुषि स्वस्वरूपनिष्ठाप्रतिबंधके इत्यर्थः। यदध्यासात् यस्मिन् हंकारेअध्यासात् प्रतीचः सर्वव्यापिनः ॥ ५२ ॥

चिद्रूपस्य तव सुखतनोः सुखस्वरूपस्य जनिमृतिजरादुःखैर्बहुला अनेकविधा इयंसंसृतिःप्राप्ता ॥ ६ ॥ अहंकारंविना संसारोनास्तीत्याह सदेति- सदैकरूपस्य चिदात्मनः चैतन्यरूपस्य विभोः व्यापकस्य आनंदमूर्तेः अनवद्यकीर्तेः निर्दोषकीर्तिमंतः अविकारिणः विकाररहितस्य ते तव अमुष्यअहंकारस्य अहमित्यध्यासंविना अन्यथाअन्यप्रकारेण संसृतिः जन्मादिप्राप्तिर्नैवास्ति नविद्यते इत्यर्थः ॥ ७ ॥ अहंकारोजेतव्यइत्याह तस्मादिति- यस्मादहंकारएवात्मसुखप्रतिबंधकस्तस्मात् इममहंकाररूपं स्वशत्रुं दुःखदं आत्मसुखभोक्तुकामस्य यथा गलेकंटकः प्रतीतः अन्नभोक्तुर्दुखदोभवति तथायमपि आत्मसुखभोक्तुः प्रतिबंधकः एनंविज्ञानरूपमहासिना खड्गेन छित्वा विनाश्य साम्राज्यसुखंमोक्षसुखं यथेष्टं भुंक्ष्व अनुभवेत्यर्थः ॥ ८ ॥ पुनरप्येतदेवाह ततइति- यतो हंकारसंगो दुःखदस्ततःकारणात् अहमादेः

सदैकरूपस्य चिदात्मनो विभोरानन्दमूर्तेरनवद्यकीर्तेः ॥ नैवान्यथाक्वाप्यविकारिण-
स्ते विनाहमध्यासममुष्य संसृतिः ॥ ७ ॥ तस्मादहंकारमिमं स्वशत्रुं भोक्तुर्गले कण्टक-
वत्प्रतीतम् ॥ विच्छिद्य विज्ञानमहासिना स्फुटं भुंक्ष्वात्मसाम्राज्यसुखं यथेष्टम् ॥ ८ ॥
ततोहमादेर्विनिवर्त्य वृत्तिं संत्यक्तरागः परमार्थलाभात् ॥ तूष्णीं समास्वात्मसुखानुभूत्या
पूर्णात्मना ब्रह्मणि निर्विकल्पः ॥ ९ ॥

अहंकारममकारादेरनुवृत्तिंसंगं विनिवर्त्य त्यक्त्वा परमार्थस्यात्मानंदस्य लाभात्सर्वत्रसंत्यक्तरागः त्यक्तस्नेहः आत्मसुखानुभूत्या युक्तो निर्विकल्पःसन् पूर्णात्मना तूष्णीं ब्रह्मणि समास्व सम्यक्तयास्थितिंकुर्वित्यर्थः ॥ ९ ॥ पुनरहंकृतेश्चिंतनं नकर्तव्यमित्याह समूलेति— अयमहं अहंकारः समूलकृत्तोपि समूलमुच्छिन्नोपि पुनश्चेतसा बाधितानुवृत्त्यापि यदिक्षणमपिव्युल्लेखितः स्मृतोभवति तदासंजीव्य उत्थानं

समूलकृत्तोपि महानहं पुनर्व्युल्लेखितः स्याद्यदि चेतसा क्षणम् ॥ संजीव्य विक्षेपशतं करोति नभस्वता प्रावृषि वारिदो यथा ॥ १० ॥ निगृह्य शत्रोरहमोऽवकाशः क्वचिन्न देयो विषयानुचिंतया ॥ स एव संजीवनहेतुरस्य प्रक्षीणजम्बीरतरोरिवाम्बु ॥ ११ ॥

कृत्वा विक्षेपशतंकरोति यथाप्रावृषि वर्षर्त्तौ नभस्वता पवनेन उत्थापितोवारिदोमेघः विक्षेपंकरोतीत्यर्थः ॥ १० ॥ विषयचिंतैवाहंकारहेतुरित्याह निगृह्येति— इममहंकारंजिगीषुश्चित्तंनिगृह्यनिरुध्य विषयानुचिंतया अहमोहंकारस्य शत्रोरवकाशोऽवसरःक्वचिदपि नदेयः अस्याहंकारस्य जीवनहेतुः पुनरुत्थानहेतुः सएवविषयचिंतावकाशएव तत्रदृष्टान्तमाह यथा प्रक्षीणजंबीरतरोः अम्बुहेतुर्भवति जलेन

चितो जंबीरवृक्षःपुनर्वर्द्धतेइत्यर्थः ॥ ११ ॥ विषयसन्धानमेव कामनाहेतुरित्याह देहात्मनेति- यः पुरुषोदेहात्मना देहाभिमानी भूत्वा संस्थितः सएव कामीसंकल्पवान्भवति यस्तुविलक्षणः त्यक्तदेहाभिमानः सकामयितासंकल्पयुक्तः कथंस्यात् नकथमपीत्यर्थः अतःकारणात् अर्थं संधाने विषयस्मरणे परत्वंतत्परताएव भेदप्रसक्त्या भेदबुद्ध्युत्पादनेन भवबंधहेतुर्भवतीति विषयस्मरणंनकर्तव्यमित्यर्थः ॥१२॥

देहात्मना संस्थित एव कामी विलक्षणः कामयिता कथं स्यात् ॥ अतोर्थसन्धानपरत्वमेव भेदप्रसक्त्या भवबंधहेतुः ॥ १२ ॥ कार्यप्रवर्द्धनाद्बीजप्रवृद्धिः परिदृश्यते ॥ कार्यनाशाद्बीजनाशस्तस्मात्कार्यं निरोधयेत् ॥ १३ ॥ वासनावृद्धितःकार्यं कार्यवृद्ध्या च वासना ॥ वर्द्धते सर्वथा पुंसः संसारो न निवर्तत्ते ॥ १४ ॥ संसारबंधविच्छित्त्यै तद्द्वयं प्रदहेद्यतिः ॥ वासनावृद्धिरेताभ्यां चिंतया क्रियया बहिः ॥ १५ ॥

कार्यंकर्म तस्यवृद्ध्या बीजानांवासनानां वृद्धिर्दृश्यते कर्मनाशात्तत्यागात् बीजनाशःवासनात्यागस्तस्मात् कार्यंकर्मनिरोधयेत् त्यजेदित्यर्थः १३ किंच वासनावृद्धितः कार्यंकर्म प्रवृत्तिर्भवति कार्यवृद्ध्या कर्मसुप्रवृत्या वासनावृद्धिर्भवति अतः पुंसः सर्वथासंसारोननिवर्तते ॥१४॥ तदा किंकार्यमित्यत्रआह संसारेति- तस्मात्संसारबंधविच्छित्त्यैनिवृत्त्यै तद्द्वयंविषयचिंतनंकर्मच द्वयंप्रदहेत् त्यजेत् यतिः सर्वसंन्यासं कृत्वेत्यर्थः एता-

॥ ५४ ॥ भ्यांचिंतया विषयचिंतनेन बहिः क्रिययाच वाह्यकर्मणाच वासनावृद्धिर्भवतीति ॥ १५ ॥ कस्तर्हि सर्वथातन्निवृत्युपायइत्यतआह ताभ्यामि-
तिसप्तभिः- सावासना ताभ्यां विषयचिंतनकर्मानुष्ठानाभ्यां प्रवर्द्धमानासती आत्मनः स्वस्य संसृतिं जन्ममरणादिरूपां सूतेजनयतीत्यर्थः
एषांत्रयाणां कर्मविषयचिंतावासनारूपाणां क्षयोपायस्तुअयमेव कोसावित्यतआह सर्वावस्थासुसर्वदा ॥ १६ ॥ तथासर्वत्रसर्वतश्चब्रह्ममात्रा-

ताभ्यां प्रवर्धमाना सा सूते संसृतिमात्मनः ॥ त्रयाणां च क्षयोपायः सर्वावस्थासुसर्वदा ॥ १६ ॥
सर्वत्र सर्वतः सर्वं ब्रह्ममात्रावलोकनैः ॥ सद्भाववासनादार्ढ्यात्तत्त्रयं लयमश्नुते ॥ १७ ॥ क्रिया-
नाशे भवेच्चिंतानाशोऽस्माद्वासनाक्षयः ॥ वासनाप्रक्षयो मोक्षः सा जीवन्मुक्तिरिष्यते ॥ १८ ॥

वलोकनैर्ब्रह्मात्मैकाकारदृष्टिभिः सद्भावस्य ब्रह्मभावस्य या वासनातस्यादार्ढ्यात् ब्रह्मैकाकारदृष्ट्यातत्त्रयंसर्वं निःशेषं लयंविनाशं यथा प्रा-
प्नोतीत्येतादृशोयोयत्नः सएवतन्निवृत्युपायइत्यर्थः ॥ १७ ॥ ब्रह्ममात्रावलोकनमितिपाठे ब्रह्ममात्रावलोकनं च त्रयाणांक्षयोपाय इतियोज- ॥ ५४ ॥
ना ॥ १७ ॥ तत्र क्रममाह क्रियेति- कर्माभावेसति तत्फलचिंतानाशः चिंतनाभावे वासनाक्षयः वासनाक्षयस्तु मोक्षएव सा जीवन्मुक्तिरि-

ष्यते विद्वद्भिरितिशेषः ॥ १८ ॥ सतोब्रह्मणो या वासना प्रतिक्षणंतत्परता तस्याः स्फूर्त्तिःप्रकाशः तस्यविजृंभणे आधिक्ये सति असौ अहमादिवासना अतिप्रकृष्टावृद्धापि आत्मवासनयाविलीनापि अरुणप्रभायांअरुणोदये यथा तमिस्रा घोरांधकारवतीरात्रिः साधुसर्वथा विलीयते तथापि ननिःशेषा निवृत्ताभवतीत्यर्थः ॥ १९ ॥ आत्मवासनयाऽहमादिबंधनिवृत्तेः किमुतात्मसाक्षात्कारे इतिकैमुतिकन्यायेनाह

सद्वासनास्फूर्तिविजृंभणे सत्यसौ विलीना प्यहमादिवासना ॥ अतिप्रकृष्टाप्यरुणप्रभायां विलीयते साधु यथातमिस्रा ॥१९॥ तमस्तमः कार्यमनर्थजालं न दृश्यते सत्युदिते दिनेशे ॥ तथाद्वयानंदरसानुभूतौ नैवास्ति बंधो न च दुःखगंधः ॥ २० ॥ दृश्यंप्रतीतंप्रविलापयन्सन्मात्रमानंदघनं विभावयन् ॥ समाहितः सन्बहिरंतरं वा कालं नयेथाः सति कर्मबन्धे ॥ २१ ॥

तम इति–दिनेशेभास्करेउदितेसति तमःअंधकारः तमःकार्यंपदार्थादर्शनम् तत्कृतमनर्थजालंगर्तादिषुपतनं एतदादिसर्वं दिनेशे सूर्य्येउदितेसति नदृश्यते तथाऽद्वयानंदरसः आत्मस्वरूपं तस्यानुभूतौ साक्षात्कारेसति अहमादिबंधो नैवास्ति तत्कृतदुःखस्यतु गंधो लेशोपिनास्तीत्यर्थः ॥२०॥ कथंतर्हिकालक्षेपः कार्यं इत्यतआह दृश्यमिति– प्रतीतं स्मृतिविषयतांप्राप्तं दृश्यजातं प्रविलापयन् समाहितः सावधानः सन् सन्मात्रं

सद्रूपं आनंदघनं आनंदैकरूपमात्मस्वरूपं बहिरंतरंवा विभावयन् विशेषेणचिंतयन् कर्मबंधेप्रारब्धकर्मशेषेसति इत्थंकालंनयेथाः न चित्तं व्यग्रंकुर्वीथा इत्यर्थः ॥ २१ ॥ ब्रह्मनिष्ठा सदाकर्तव्येत्याह प्रमादइति– ब्रह्मनिष्ठायां प्रमाद आलस्यं नकर्तव्यः कदाचन क्षणमपीत्यर्थः ब्रह्मणःसुतोभगवान् सनत्सुजातोभास्ते धृतराष्ट्रंप्रति इत्याह इतीतिकिम् प्रमादोमृत्युरिति ॥२२॥ प्रमादस्य दोषानाह नप्रमादादिति–स्वस्वरूपतः



प्रमादो ब्रह्मनिष्ठायां न कर्तव्यः कदाचन॥प्रमादो मृत्यु रित्याह भगवान् ब्रह्मणः सुतः ॥२२॥
न प्रमादादनर्थो न्यो ज्ञानिनः स्वस्वरूपतः॥ ततो मोहस्ततोऽहंधीस्ततो बंध स्ततोव्यथा ॥२३॥
विषयाभिमुखं दृष्ट्वा विद्वांस मपि विस्मृतिः ॥ विक्षेपयति धीदोषैर्योषा जारमिवप्रियम् ॥२४॥

प्रमादात् अन्यचिंतनात् अन्योधिको ऽनर्थोज्ञानिनोनास्ति ततःअन्यचिंतनात् अन्यत्रमोहःप्रीतिर्भवति ततस्तत्राहंधीरभिमानंभवति अभिमानात् बंधस्तदासक्तिर्भवति आसक्तेस्तन्नाशादौ व्यथादुखंभवति इत्यात्मचिंतने प्रमादोनकर्तव्यइति२३अन्यद्दोषांतरमाह विषयेति–विद्वांसमपिपुरुषं विषयाभिमुखं दृष्ट्वा एषाविस्मृतिःस्वरूपास्मरणरूपा विक्षेपयतिकैः धीदोषैःकामक्रोधादिभिःयथायोषासुशीलापि जारंपरांगना–

सक्तांप्रियं स्वपतिं विक्षेपयति तदुपेक्षणेन जारतादोषनिरूपणेन वादुःखितं करोतीत्यर्थः ॥ २४ ॥ मुमुक्षुणात्मविस्मृतिः क्षणमात्रमपि न कार्येत्याह यथेति- जलेविद्यमानं शैवालं अपकृष्टं इतस्ततश्चालितं जलंदर्शयति क्षणमात्रमपिचालनरहितं नतिष्ठति किंतु जलमाच्छादयति एवं माया प्राज्ञंविद्वांसं निपुणमपिआत्मपराङ्मुखं आवृणोति साक्षात्कारेपिप्रतिबंधिका भवतीत्यर्थः ॥ २५ ॥ चित्तस्वभावमाह

यथापकृष्टंशैवालं क्षणमात्रं न तिष्ठति ॥ आवृणोति तथा माया प्राज्ञं वापि पराङ्मुखम् ॥ २५ ॥
लक्ष्यच्युतं चेद्यदि चित्तमीषद्बहिर्मुखं सन्निपतेत्ततस्ततः ॥ प्रमादतः प्रच्युतकेलिकंदुकः सोपानपङ्क्तौ पतितो यथा तथा ॥ २६ ॥ विषयेष्वाविशच्चेतः संकल्पयति तद्गुणान् ॥ सम्यक्सङ्कल्पनात्कामः कामात्पुंसः प्रवर्तनम् ॥ २७ ॥

लक्ष्यच्युतमिति- यथाप्रमादात् हस्तग्रहणसावधानताभावरूपात् प्रच्युतः अधः पतितो यः केलिकंदुकः स यथा सोपानपङ्क्तौपतितः ततस्ततः सन्निपतति तथा इदंचित्तं लक्ष्यच्युतं त्यक्तात्मचिंतनं चेद्यदि बहिर्मुखं भवेत् तदाततस्ततः विषयाद्विषयांतरं सन्निपतेत् न सहसांतर्मुखं भवतीत्यर्थः ॥ २६ ॥ विषयेभ्यः सहसानिवृत्यभावेकारणमाह विषयेष्विति- विषयेषु आविशच्चित्तं विषयस्मृतियुक्तं चित्तं तद्गु-

णान् तेषांविषयाणांगुणान् स्मरतितेषांविषयगुणानां सम्यक् विशेषतः संकल्पनात् स्मरणात् तेषुविषयेषु कामोभिलाषो भवति तस्माद-भिलषात् तेष्वेवविषयेषुप्रवृत्तिः अतिशयेनवर्तनं तत्परत्वंभवति ननिवृत्तिरिति जन्ममरणारूपं संसारंप्रतिपद्यते इत्यर्थः ॥ २७ ॥ प्रमाद-स्त्याज्य एवेत्याह अतइति— यतःप्रमादएव परंपरयासंसारहेतुरतः प्रमादात् आत्मचिंतनविच्छेदरूपात् परोधिको मृत्युर्दुःखहेतुः कोपिनास्ति विवेकिनोब्रह्मविदः परोक्षज्ञानवतः यस्मात्समाधौसमाहितः सम्यक्तया स्थितः पुरुषः सिद्धिं आत्मसाक्षात्काररूपां उपैति प्रा-

अतः प्रमादान्नपरोऽस्ति मृत्युर्विवेकिनो ब्रह्मविदः समाधौ॥ समाहितः सिद्धिमुपैति सम्यक्स-
माहितात्मा भव सावधानः ॥२८॥ ततः स्वरूपविभ्रंशो विभ्रष्टस्तु पतत्यधः ॥ पतितस्य विना
नाशं पुनर्नारोह ईक्ष्यते ॥ २९ ॥ संकल्पं वर्जयेत्तस्मात्सर्वानर्थस्य कारणम् ॥ जीवतो यस्य कैव-
ल्यं विदेहेच सकेवलः ॥ यत्किंचित्पश्यतो भेदं भयं ब्रूते यजुः श्रुतिः ॥ ३० ॥

प्नोति तस्मात्त्वं सावधानः सन् सम्यक् समाहितात्मासमाधियुक्तो भवेत्यर्थः ॥२८॥ विषयप्रवृत्तौतु स्वरूपनिष्ठादुर्लभेत्याह ततइति— ततोविषय-प्रवर्तनात् स्वरूपविभ्रंशः आत्मस्मृतेरभावो देहाभिनिवेशश्च स्वरूपविभ्रष्टश्च अधोनिकृष्टयोनिदेषुपतति पतितस्याधोयोनिप्रदत्विषयभावनां गतस्य नाशंविना पुनरारोहं आत्मनिष्ठाप्राप्तिर्नैक्ष्यते नदृश्यते केनापि दुःखप्राप्तिरेव तस्यनिरंतात्मनाशरूपेत्यर्थः ॥२९॥ तदाकिंकर्तव्यमित्यत-

माह संकल्पमिति— तस्मात्कारणात्सर्वानर्थस्य कारणं संकल्पंवर्जयेत् संकल्पवर्जने आत्मनिष्ठायां महालाभमाह यस्यात्मनिष्ठस्य जीवतः कैवल्यंजीवन्मुक्तिः विदेहेदेहघाते च स केवलः सच्चिदानन्दरूपइत्यर्थः आत्मपरमात्मनो यत्किंचिदपिभेदं पश्यतःपुंसः यजुः श्रुतिर्बृहदारण्यश्रुतिर्भयं वक्ष्यमाणं ब्रूतेकथयतिइत्यर्थः ॥ ३० ॥ उक्तश्रुत्यर्थमाह यदेति— एषविपश्चिद्विद्वान्यदाकदाचिदपि अणुमात्रंस्वल्प-

यदा कदा वापि विपश्चिदेष ब्रह्मण्यनंतेप्यणुमात्रभेदम् ॥ पश्यत्यथामुष्य भयं तदेव यद्वीक्षितं भिन्नतया प्रमादात् ॥ ३१ ॥ श्रुतिस्मृतिन्यायशतैर्निषिद्धे दृश्ये त्रयः स्वात्ममतिं करोति ॥ उपैति दुःखोपरिदुःखजातं निषिद्धकर्ता स मलिम्लुचो यथा ॥ ३२ ॥

मपिभेदंपश्यति अथानंतरं अमुष्यभेददर्शनकालेएव भयंसंसारदुःखंभवतिकुतोभयंभवतीत्यतआह यस्मात्तेनप्रमादात् वृत्तेरस्थैर्यात् भिन्नतया ब्रह्मवीक्षितंदृष्टमित्यर्थः ॥३१॥ आत्मदृश्यमिथ्याभूतबुद्ध्यादावात्मबुद्धेर्दुःखहेतुत्वमाह श्रुतीति—श्रुतिस्मृतिन्यायशतैर्निषिद्धेमिथ्यात्वेननिराकृते अत्र यो मूढः स्वात्ममतिं करोति स दुःखोपरिदुःखादनंतरं पुनरपि दुःखजातं दुःखसमुदायं उपैति प्राप्नोति यथामलिम्लुचः पापात्मा

 निषिद्धकर्ता दुःखात् दुःखंप्राप्नोति तथायमपि ॥ ३२ ॥ सत्यनिष्ठस्यसुखं मिथ्यानिष्ठस्यदुःखमिति सदृष्टान्तमाह सत्याभीति— सत्येप- 
रमात्मनि अभिसंधानं तत्परत्त्वं तदेकनिष्ठत्वं तत्ररतः आत्मध्यानतत्परइत्यर्थः सपुरुषोविमुक्तः सन् आत्मीयंमहत्वं स्वरूपनिष्ठां नित्यं स
॥ ५७ ॥ मुपैतिप्राप्नोति यस्तु मिथ्याभिसंधानरतो देहादावात्मबुद्धिं करोति सतुनश्येदेव एतत्सर्वं चौराचोरयोर्दृष्टम् यथाह्यचौर आत्मानमचौरं 
वदन् राजसभायांपरीक्षितः हस्तधृततप्तलोहोपि न दग्धहस्तो भवति राजदण्डाद्विमुक्तो भवति प्रतिष्ठांचप्राप्नोति एवंसत्यात्मनिष्ठोपि 

सत्याभिसंधानरतो विमुक्तो महत्वमात्मीयमुपैतिनित्यः ॥ मिथ्याभिसंधानरतस्तु नश्येद् दृष्टं
यदेतद्यदचौरचौरयोः ॥३३॥ यतिरसदनुसंधिं बंधहेतुं विहाय स्वयमय महमस्मीत्यात्मदृष्ट्यैव
वतिष्ठेत् ॥ सुखयति ननु निष्ठाब्रह्मणि स्वानुभूत्याहरति परमविद्याकार्यदुःखं प्रतीतम् ॥ ३४ ॥

यस्तुचौरः आत्मानमचौरं वदनि सराजसभायां परीक्षितः हस्तधृततप्तलोहो दाहं प्राप्नोति राजदण्डं च बंधनंप्राप्नोति जगत्यप्रतिष्ठांचा-
प्नोति एवं मिथ्याभिसंधोदेहाभिमानीत्यर्थः ॥ ३३ ॥ तस्माद्यतिः सत्यामात्मरतिमेवकुर्यादित्याह यतिरिति— योयतिः यतचित्तः पुरुषः ॥ ५७ ॥
असदनुसंधिं असतिदेहादौ अनुसंधिं आत्मत्वेनासक्तिं बंधहेतुं संसारबंधकारणभूतां विहायत्यक्त्वा स्वयं तु अयंसच्चिदानंदरूपब्रह्मैवा-

हमस्मीति आत्मदृष्टियुक्तएवावतिष्ठेत तं ननुनिश्चितं स्वानुभूत्यास्वानुभवेन सुखसाधनेमयुक्ता ब्रह्मणिनिष्ठासुखयति तथापरंदुःसहंप्रतीतं अनुभुज्यमानं अविद्याकार्याणां रागद्वेषादीनां दुःखंहरति वारयतीत्यर्थः ॥ ३४ ॥ आत्मानुचिंतनमेवसुखमित्याह वाह्येति—बाह्येषु विषयेषु अनुसंधिः प्रीतिः ततस्ततोधिकां दुर्वासनामेव फलंवर्द्धयति इति विवेकैः गुणदोषदर्शनैः ज्ञात्वा वाह्यं विषयचिंतनं परिहृत्यत्यक्त्वा नित्यमनुक्षणंसदा आत्मानुचिंतनं विदधीत कुर्यादित्यर्थः ॥ ३५ ॥ बाह्यनिरोधे फलमाह बाह्येति— बाह्ये अनात्मबुद्ध्यादिप्रपंचे निरु-

बाह्यानुसंधिः परिवर्धयेत्फलं दुर्वासनामेव ततस्ततो धिकाम् ॥ ज्ञात्वा विवेकैः परिहृत्य बाह्यं
स्वात्मानुसंधिं विदधीत नित्यम् ॥ ३५ ॥ बाह्ये निरुद्धे मनसः प्रसन्नता मनः प्रसादे परमात्मदर्शनम् ॥
तस्मिन्सुदृष्टे भवबंधनाशो बहिर्निरोधः पदवी विमुक्तेः ॥ ३६ ॥ कः पण्डितः सन्सदसद्विवेकी
श्रुतिप्रमाणः परमार्थदर्शी ॥ जानन्हि कुर्यादसतोवलंबं स्वपातहेतोः शिशुवन्मुमुक्षुः ॥ ३७ ॥

द्धेबहिरपसारितेविस्मृते मनसःप्रसन्नताभवति मनःप्रसादेमनोनैर्मल्येसति परमात्मदर्शनंभवति तस्मिन्नात्मनिसुदृष्टे सम्यक्तया दृष्टेसति भवबंधस्यनाशोभवति अतोयंबहिर्निरोधोविषयाऽस्मरणं विमुक्तेर्मोक्षस्यपदवीस्थानंकारणमित्यर्थः ॥ ३६ ॥ विदुषोऽसन्निष्ठा न भवतीत्याह कइति— मुमुक्षुःपण्डितःसदसद्विवेकी श्रुतिप्रमाणवान् परमात्मदर्शनशीलश्चसन् असदवलंबनेदोषंजानन् स्वपातहेतोःस्वस्यजन्ममरणा-

वि॰चू॰ दिसंसारहेतोः असती मिथ्यारूपस्य बुद्ध्यादिप्रपंचस्यावलंबनमाश्रयणं विश्वासं तत्रास्थां बालवत्कः कुर्यात् नकोपीत्यर्थः यथाभूषणभूषितः सटी॰
शिशुर्बालोऽसतोवंचकस्य स्वपातहेतोरवलंबं विश्वासंकृत्वातेनगृहीतः स्वपातमृच्छति सर्पादेर्वाऽवलंबं विश्वासंकृत्वानेनदष्टः स्वपातमृच्छति
॥ ५८ ॥ जलाशयेवाऽसतो अविद्यमानस्य प्रतिबिंबस्य स्वपातहेतोरवलंबं कृत्वाजलेप्लुतःस्वपातमृच्छति एवंविद्वान् मिथ्यावलंबनंनकरोतीत्यर्थः ३७ अ॰
मुक्तेर्देहाभिमानस्य चपरस्परविरुद्धत्वाद्विदुषोदेहाभिमतिर्नसंभवतीत्याह देहादीति— देहाद्यासक्तिमतः पुंसो मुक्तिर्नसंभवति मुक्तस्य ५

देहादिसंसक्तिमतो न मुक्तिर्मुक्तस्यदेहाद्यभिमत्यभावः॥सुप्तस्य नो जागरणं न जाग्रतः स्वप्न-
स्तयोर्भिन्नगुणाश्रयत्वात् ॥ ३८ ॥ अन्तर्बहिः स्वंस्थिरजङ्गमेषु ज्ञात्वात्मना धारतया वि-
लोक्य ॥ त्यक्ताखिलोपाधिरखण्डरूपः पूर्णात्मना यः स्थित एष मुक्तः ॥ ३९ ॥

देहाभिमतिर्नसंभवति अत्रदृष्टांतः यथासुप्तस्यजागरणं जाग्रतश्चस्वप्नोनसंभवति कुतःभिन्नगुणाश्रयत्वात् जाग्रत्स्वप्नयोर्विरुद्धधर्मवत्त्वादि-
त्यर्थः ॥ ३८ ॥ मुक्तस्वरूपमाह अन्तरिति— अन्तर्बहिश्चस्थिरेषुवृक्षादिषुजंगमेषुब्रह्मादिस्तम्बपर्यंतेषु स्वं आत्मानं चिदानन्दरूपं ज्ञात्वा ॥ ५८ ॥
आत्मनाशुद्धेनमनसासर्वाधारतया विवर्ताधिष्ठानतयाच पुनर्विलोक्य तमेवसत्यतयानिश्चित्य त्यक्ताखिलोपाधिः त्यक्ताअखिलाउपाधयो

बुद्ध्यादिस्थावरांतायेनस अखण्डरूपोदेशकालवस्तुपरिच्छेदशून्यः यःपूर्णात्मनातिष्ठति समुक्तः जीवन्मुक्तइत्यर्थः ॥ ३९ ॥ सर्वात्मभावं स्तौति सर्वात्मेति— या सर्वात्मता एकात्मदृष्टिः साबंधस्य जन्ममरणादेर्विमुक्तिहेतुः निवृत्तिकारणं सर्वात्मभावात् सर्वमात्मेतिभावनात् चिंतनात् परो भिन्नः उत्कृष्टोवा कश्चिन्मुक्त्युपायोनास्ति असौसर्वात्मभावोऽस्यमुमुक्षोः सदात्मनिष्ठया समाधिरूपया दृश्याभावेदृश्यस्य

सर्वात्मना बंधविमुक्तिहेतुः सर्वात्मभावान्न परोस्ति कश्चित् ॥ दृश्याग्रहे सत्युपपद्यतेसौ सर्वात्मभावोस्य सदात्मनिष्ठया ॥ ४० ॥ दृश्यस्याग्रहणं कथं नु घटते देहात्मना तिष्ठतो बाह्यार्थानुभवप्रसक्तमनसस्तत्तत्क्रियां कुर्वतः ॥ संन्यस्ताखिलधर्मकर्मविषयैर्नित्यात्मनिष्ठापरैस्तत्वज्ञैः करणीयमात्मनि सदानन्देच्छुभिर्यत्नतः ॥ ४१ ॥

मिथ्याप्रपंचस्याभानेसतियुज्यतेसंभवतीत्यर्थः ॥ ३४० ॥ बाह्यग्रहणनिवृत्यर्थं देहात्मबुद्धिस्त्याज्येत्याह वक्ष्यति—देहात्मनातिष्ठतः पुरुषस्य दृश्यस्यअग्रहणंकथं घटतेनकथमपीत्यर्थः कथंभूतस्यबाह्यार्थानांस्रक्चंदनवनितादीनांयोनुभवःसेवनंतस्मिन्प्रसक्तंमनोयस्यतस्य तत्तत्क्रियांतत्तत्संपादनानुकूलां क्रियांव्यापारंयत्नं कुर्वतः कथंदृश्याग्रहणमित्यर्थः कथंतर्हिंकर्तव्यमित्यतआह तत्वज्ञैःआत्मस्वरूपज्ञैःसंन्यस्तात्यक्ता

अखिलधर्मकर्मविषयायैस्तेसंन्यस्ताखिलधर्मकर्मविषयास्तैरेतादृशैः पुरुषैरात्मनिष्ठायांतत्परैर्यत्नतोदृश्याग्रहणंकर्तव्यमितियोजना ॥४१॥ निद्रां लोककथांविहाय पटुतां बाह्यार्थसंचिंतनम् स्वात्मानंदविमोषकारणं महंकारं त्यजेद्दूरतःसन्यस्ताखिलकामकर्मकलनःस्वात्मै कनिष्ठो भवेदित्यु क्तं गुरुणा विवेककमणावध्यायके पञ्चमे॥५॥इति श्रीजगाधरीनगरस्थसारस्वतवंशावतंस श्रीमन्मिश्रहरिधनपुरोहितात्मजवेदान्तनिष्ठपण्डित हरिनामदत्तविरचितायां विवेकचूडामणिटीकायांसुबोधिन्यां सत्यात्मस्थितिरूपसत्वापत्तिचतुर्थभूमिकानिरूपणोनाम पञ्चमोऽध्यायः ॥५॥



सर्वात्मसिद्धये भिक्षोः कृतश्रवणकर्मणः ॥ समाधिं विदधात्येषा शान्तोदान्त इतिश्रुतिः ॥ ४२ ॥
आरूढशक्तेरहमोविनाशः कर्तुं न शक्यः सहसापि पण्डितैः ॥ ये निर्विकल्पाख्यसमाधिनि-
श्चलास्तानन्तरानन्तभवाहि वासनाः ॥ ४३ ॥

दृश्याग्रहणे आत्मनिष्ठायां च कोयत्नइत्यतआह सर्वेति–भिक्षोःत्यक्तसर्वपरिग्रहस्य कृतश्रवणकर्मणः कृतंश्रवणरूपंकर्मयेनतस्य श्रुतमहावाक्यस्ये-त्यर्थः सर्वात्मसिद्धये संपादनाय शान्तोदान्तउपरतस्तितिक्षुरित्यादिरेषाश्रुतिः समाधिमात्मनिष्ठार्थं विदधातिइतिबाह्यप्रवृत्तिरोधनार्थमा-त्मनिष्ठार्थंच समाधिःकर्तव्यइत्यर्थः ॥ ४२ ॥ समाधेःस्तुतिमाह आरूढेति– येपुरुषानिर्विकल्पकाख्यसमाधौ निश्चलानिश्चलमनसस्तान् पुरु-षान् अंतराविमातान् वर्जयित्वेति तैस्तु अहमोहंकारस्यविनाशः कर्तुंशक्यः तद्भिन्नैःपण्डितैरपि सहसाबलात्कारेणापि आरूढशक्तेःलब्ध-

बलस्याहमोहंकारस्य विनाशः कर्त्तुंनशक्यः कुतोनशक्य इत्याशंक्याह अनंतभवाहिवासना हि यतः पुरुषाणां हृदिस्थावासना अनन्तभवा अनन्तेषु भवेषु जन्मसुजाताअनन्तभवास्तासुवासनासु वर्तमानासु कथमहंकारनिवृत्तिरित्यर्थः ॥ ४३ ॥ कथंवासनोत्पत्तिरित्याशंक्यर-जस्तमःप्राबल्यादित्याह अहमिति– रजोगुणसमुद्भवाविक्षेपशक्तिः आवृत्तेर्बलात् तमोगुणोत्पन्नावरणशक्तेर्बलात् पुरुषंविवेकशून्यं मो-हिन्या अहंबुद्धयाएवयोजयित्वा देहादिष्वहंकारमुत्पाद्य तद्गुणैरहंकारधर्मैः कर्तृत्वभोक्तृत्वरागद्वेषादिभिर्विक्षेपयतिक्लेशयतीत्यर्थः ॥ ४४ ॥

अहंबुद्ध्यैव मोहिन्या योजयित्वावृतेर्बलात् ॥ विक्षेपशक्तिः पुरुषं विक्षेपयति तद्गुणैः॥४४॥
विक्षेपशक्तिविजयो विषमो विधातुं निःशेषमावरणशक्तिनिवृत्यभावे ॥ दृग्दृश्ययोः स्फुटपयो
जलवद्विभागे नश्येत्तदावरणमात्मनि च स्वभावात् ॥ ४५ ॥

विक्षेपशक्तिः कथंजेतव्येतिपृष्टआह विक्षेपेति– निःशेषंसर्वथा आवरणशक्तिनिवृत्यभावे विक्षेपशक्तिविजयोविधातुंकर्त्तुंविषमः अशक्य इत्यर्थः कथंतर्हिआवरणनिवृत्तिरित्यतआह दृग्दृश्ययोरात्मानात्मनोः स्फुटंस्पष्टतयापयोजलवत् यथाहंसः क्षीरनीरयोर्विभागंकरोति एवमात्मानात्मनोः पृथक्कृतयाविभागेविवेकेस्वरूपज्ञानेसति तदात्मनि आवरणं स्वभावात् स्वयंप्रकाशात्मविज्ञानादेवनश्येत् इति ॥ ४५ ॥

 

विवेकाद्विक्षेपनिवृत्तिरपीत्याह निःसंशयेति- यदिचेत् मृषार्थैमिथ्यैवदृश्यमाने वुद्ध्यादिपदार्थे दृग्दृश्यपदार्थयोस्तत्त्वंस्वरूपं विभज्यपृथ-कृकृत्यस्फुटबोधजन्यः स्पष्टतयास्वरूपज्ञानजन्योविवेकः पृथक्कृतयाज्ञानं निःसंशयेनप्रतिवंधशून्यो अलंभावनादिप्रतिवंधशून्यो भवति तदाविक्षेपणंनहिभवतीतियोजना तदासौविवेकोमायाकृतमोहबंधंछिनत्ति यस्मान्मोहवंधादज्ञानबंधाद्विमुक्तस्यपुनः संसृतिर्जन्ममरणादि-

निःसंशयेन भवति प्रतिबंधशून्यो विक्षेपणं नहितदायदिचेन्मृषार्थे॥ सम्यग्विवेकः स्फुटबोधजन्यो विभज्यदृग्दृश्यपदार्थतत्वम् ॥ छिनत्ति मायाकृतमोहबंधं यस्माद्विमुक्तस्य पुनर्न संसृतिः ॥ ४६ ॥ परावरैकत्वविवेकवह्निर्दहत्यविद्यागहनं ह्यशेषम् ॥ किंस्यात्पुनः संसरणस्य बीजमद्वैतभावं समुपेयुषोस्य ॥ ४७ ॥

लक्षणा नभवति तन्मूलभूताज्ञानस्य निवृतत्वादित्यर्थः ॥ ४६ ॥ अज्ञानाभावेसंसाराभाव इत्याह परेति- परःपरमात्मा अवरोजीवःतयो-रेकत्वंतत्वमसीति महावाक्येनभागत्यागलक्षणयालक्षितं तदेववह्निरग्निः सचअविद्यारूपंगहनंवनं अशेषं संपूर्णंदहति अस्यात्मनःजीवस्या 

द्वैतभावंसमुपेयुषः प्राप्तस्य अविद्यानिवृत्तौपुनःसंसारस्यजन्ममरणादेर्बीजं किंस्यान्नकिमपीत्यर्थः ॥ ४७ ॥ सम्यक्दर्शनफलमाह आवरणेति— पदार्थस्यअध्यासाधिष्ठानस्य सम्यक्स्पष्टतयादर्शनात् आवरणस्यनिवृत्तिर्भवति मिथ्याऽऽज्ञानस्यभ्रमोत्पादकस्यविनाशोभवति तेनमिथ्या ज्ञानेनकृतस्यविक्षेपस्यनिवृत्तिश्चभवतीति ॥ ४८ ॥ अत्रदृष्टान्तः सम्यक्तयारज्जुस्वरूपज्ञानात्एतत्त्रयंदृष्टं किंतत्त्रितयमित्याकांक्षायामाह

आवरणस्य निवृत्तिर्भवति च सम्यक् पदार्थदर्शनतः ॥ मिथ्याज्ञानविनाशस्तद्विक्षेपजनितदुः
खनिवृत्तिः ॥४८॥ एतत्त्रितयं दृष्टं सम्यग्रज्जुस्वरूपविज्ञानात् ॥ तस्माद्वस्तुसतत्वं ज्ञातव्यं
बंधमुक्तये विदुषा ॥ ४९ ॥ अयोग्निियोगादिव सत्समन्वयान्मात्रादिरूपेण विजृंभते धीः ॥
तत्कार्यमेतद्वितयं यतो मृषा दृष्टं भ्रमस्वप्नमनोरथेषु ॥ ५० ॥

आवरणस्य रज्जुस्वरूपाज्ञानस्यनिवृत्तिः तथामिथ्याज्ञानस्यसर्पभ्रमजनकस्यविनाशः तथातद्विक्षेपनिवृत्तिस्तेनसर्पभ्रमेणकृतोयोविक्षेपो भयकंपादिस्तस्यनिवृत्तिः यस्मात्वस्तुसतत्वज्ञानात्सर्वानर्थनिवृत्तिस्तस्माद्वस्तुसतत्त्वं विदुषा बंधमुक्तये ज्ञातव्यमिति ॥ ४९ ॥ अत्रोपपत्तिमाह अयइति— यथाग्नियोगात् अयोलोहगोलकं अग्निवद्भासते तथा सत्समन्वयात् सतश्चैतन्यात्मनः समन्वयात्संबंधात् धीर्बुद्धिश्चेतनेव भा-

समाना मात्रादिरूपेणमातृमानमेयादिरूपेण आदिशब्दात्ज्ञातृज्ञानज्ञेयादिरूपेणप्रकाशते तत्कार्यंतस्याबुद्धेःकार्यं एतत्त्रयंमातृमानमेयरूपं भ्रमस्वप्नमनोरथेषु यतोमृषाअसत्यंदृष्टं ततोबंधस्यंभ्रमकल्पितस्यमृषात्वमितिभावः ॥ ५० ॥ बुद्ध्यादीनांक्षणिकत्वादसत्त्वमात्मनअसनात-



नत्वात्सत्त्वमित्याह ततइति— यतोविकाराणांबुद्धिमात्रत्त्वं ततोहंकारादिदेहांताःसर्वेप्रकृतेर्विकाराःसंतिविषयाश्चशब्दादयः प्रकृतेर्विकाराः अमीषां अहंकारादीनां क्षणेअन्यथाभावितया असत्वमेव आत्मातुसदैकरसत्त्वात्कदापिअन्यथाऽसन्नभवतीत्यर्थः ॥ ५१ ॥ एतद्विलक्षणंपरा-

ततो विकाराःप्रकृतेरहंमुखा देहावसाना विषयाश्चसर्वे ॥ क्षणेन्यथा भावितयाह्यमीषामसत्व

मात्मातु कदापि नान्यथा ॥५१॥ नित्याद्वयाखण्डचिदेकरूपो बुद्ध्यादिसाक्षी सदसद्विलक्षणः ॥

अहंपदप्रत्ययलक्षितार्थः प्रत्यक्सदानंदघनः परात्मा ॥५२॥ इत्थं विपश्चित्सदसद्विभज्य निश्चि

त्य तत्त्वं निजबोधदृष्ट्या ॥ ज्ञात्वा स्वमात्मानमखंडबोधं तेभ्यो विमुक्तःस्वयमेवशाम्यति ॥५३॥

त्मनःस्वरूपमाह नित्येति— नित्यंसदाअद्वयंअखंडचिदेकरूपंयस्यसः बुद्ध्यादीनांसाक्षीभावाभावविलक्षणःतत्साक्षित्वादेव अहंपदस्य यो प्रत्ययः प्रत्यभिज्ञानं तेनलक्षितअयमितिअहंपदप्रत्ययलक्षितार्थः प्रत्यक्सर्वसाक्षी सदानंदैकरसःपरात्माएतादृशइत्यर्थः ॥ ५२ ॥ आत्मवि-



वेचनफलमाह इत्थमिति— इत्थमुक्तप्रकारेण विपश्चिद्विद्वान् सत् आत्मवस्तुअसच्चानात्मरूपं बुद्ध्यादि विभज्यपृथक्कृत्य निजबोधदृष्ट्या

तत्वं निश्चित्य यथार्थभूतंवस्तुनिश्चित्य स्वमात्मानमखंडबोधंज्ञात्वा तेभ्योबुद्ध्यादिभ्योऽनात्मपदार्थेभ्योविमुक्तः तद्वासनां त्यक्त्वा स्वयमेवशाम्यति स्वात्मैकनिष्ठःस्वात्मानंदमनुभवतीत्यर्थः ॥ ५३ ॥ कदाहृदयग्रंथिभेदनंभवतीत्यतआह अज्ञानेति—अज्ञानकृता या हृदयात्मनोग्रंथिरविवेकत्वंतादात्मध्यासइति तस्याग्रंथेर्निःशेषेणसर्वथाविलयस्तदाभवतिनिश्चीयते यदानिर्विकल्पेनसमाधिना अद्वितीयस्यात्मनःकेवल-

अज्ञानहृदयग्रंथेर्निःशेषविलयस्तदा ॥ समाधिना विकल्पेन यदा द्वैतात्मदर्शनम् ॥ ५४ ॥
त्वमहमिदमितीयं कल्पना बुद्धिदोषात्प्रभवति परमात्मन्यद्वये निर्विशेषे ॥ प्रविलसति
समाधावस्य सर्वो विकल्पो विलयनमुपगच्छेद्वस्तुतत्वावधृत्या ॥ ५५ ॥

स्यदर्शनंभवति प्रत्ययांतरवासनानिवृत्तिर्भवतीत्यर्थः ॥ ५४ ॥ वस्तुतत्वज्ञानेनान्यवासनानिवृत्तिर्भवतिइत्याह त्वमहमिति— त्वमसि अहमस्मिइदमस्तीतीयंविविधाकल्पना अद्वयेनिर्विशेषेएकरूपेपरमात्मनि बुद्धिदोषात्प्रभवतिवर्द्धते अस्यबुद्धिदोषस्यैवसर्वोविकल्पः समाधौप्रतिबंधकः प्रविलसति स्फुरति सच विकल्पो वस्तुनःपरमात्मनस्तत्त्वावधृत्यायथावत्स्वरूपसाक्षात्कारेण विलयंविनाशमुपगच्छेत् तदा

निर्विकल्पःसमाधिर्भवतीत्यर्थः ॥ ५५ ॥ समाधेःप्रकारमाह शांतइति—शांतः गतमनोविकारः दान्तःविगतेंद्रियचांचल्यः परमुपरतःविषय-
भावनापरावृत्तांतःकरणवृत्तिःक्षांतियुक्तः प्रतीकारसमर्थोपिसर्वापचारसहनशीलः एतादृशोधिकारी यतिः नित्यंसमाधिंकुर्वन् स्वस्य सर्वा-
त्मभावंसर्वैःसहात्मन एकरूपतांकलयतिसंपादयतीत्यर्थः तेनसर्वात्मभावेन अविद्यातिमिरजनितान् सर्वान् विकल्पान् रागद्वेषादीन्साधुद-

शान्तो दान्तः परमुपरतः क्षान्तियुक्तः समाधिं कुर्वन् नित्यं कलयति यतिः स्वस्य सर्वा-
त्मभावम् ॥ तेनाविद्यातिमिरजनितान्साधुदग्ध्वा विकल्पान् ब्रह्माकृत्या निवसति सुखं
निष्क्रियोनिर्विकल्पः ॥ ५६ ॥ समाहिता ये प्रविलाप्यबाह्यं श्रोत्रादिचेतः स्वमहं चिदात्म-
नि ॥ तएवमुक्ता भवपाशबंधैर्नान्येतु पारोक्ष्यकथाभिधायिनः ॥ ५७ ॥

ग्ध्वानिःशेषतयानिवार्यततःनिष्क्रियः सकलक्रियारहितोनिर्विकल्पःअंतःकरणविकल्पशून्यःब्रह्माकृत्याब्रह्मस्वरूपेणसुखंनिवसतिनवद्वारेपुरे-
स्मिन्समाहितोभूत्वेत्यर्थः ॥ ५६ ॥ समाहितास्तु स्तुत्याइत्याह समाहिताइति—येसत्पुरुषाः श्रोत्रादिसर्वेंद्रियाणीत्यर्थः चेतः चतुर्विधमंतःक-
रणांस्वमात्मीयं ममतास्पदं गृहधनपुत्रादिकं अहमहंकारास्पदं बुद्ध्यादिदेहान्तबाह्यमनात्मप्रपंचं चिदात्मनिप्रविलाप्यकारणात्मनाचिदेक- ॥ ६२ ॥

रूपंसंभाव्यसमाहिताः कृतसमाधयःस्थितास्तएव भवपाशबंधैर्भवपाशबंधेभ्योमुक्ताअन्येअसमाहिता अनात्मविदःकेवलंपठितशास्त्रबलात्प-रोक्षात्मकथाभिधायिनो नत्वात्मसाक्षात्कारवंतस्तेतुनमुक्ताबद्धाएवेत्यर्थः ॥ ५७ ॥ समाधेःप्रयोजनमाह अयंप्रमाताउपाधिभेदात् बुद्ध्या-द्युपाधिभेदात् स्वयमेवकर्तृभोक्तृत्वादिना भिद्यतेअनेकविधोभवति उपाध्यपोहेउपाधिनिवृत्तौतुकेवलंस्वयमेवभवति तस्मादुपाधेर्विलयाय

उपाधिभेदात्स्वयमेव भिद्यते चोपाध्यपोहे स्वयमेव केवलः॥ तस्मादुपाधेर्विलयाय विद्वान्
वसेत्सदा कल्पसमाधिनिष्ठया ॥५८॥ सति सक्तो नरो याति सद्भावं ह्येकनिष्ठया ॥ कीटको
भ्रमरं ध्यायन्भ्रमरत्वाय कल्पते ॥ ५९ ॥

समाधिनाबाह्यप्रवृत्तिनिवृत्यभ्यासेनबाह्योपाधेर्बुद्ध्यादेर्भावनाविलयाय निवृत्तये विद्वान्सदानिर्विकल्पसमाधिनिष्ठया कल्पः शास्त्रेविधौ न्याये संवर्त्तेब्रह्मणोदिने इतिमेदिनी कल्पेनविधिना शास्त्रोक्तविधिना यासमाधिनिष्ठातयायुक्तोवसेत्समाहितोभूयादित्यर्थः ॥ ५८ ॥ ध्यानेनध्येयाकारताप्राप्तौदृष्टान्तमाह सतीति— सतिपरमात्मनि सक्तः तत्परोनरः तदेकनिष्ठयासदेकनिष्ठया सद्भावं सदात्मतां यातिप्राप्नो-

तीत्यर्थः भ्रमरगृहीतकीटकोभ्रमराद्भीतस्तमेवभ्रमरं ध्यायन्भ्रमरत्वायकल्पते भ्रमरभावंप्राप्नोतितद्वदित्यर्थः ॥ ५९ ॥ दार्ष्टान्तमाह क्रियांतरास-
क्तिमिति— क्रियांतरासक्तिं अन्यकार्यस्मृतिं अपास्यत्यक्त्वाकीटकोयथा अलित्वंभ्रमरतांध्यायन् अलिभावंऋच्छतिभ्रमररूपतां प्राप्नोतित-
थैवयोगी तदेकनिष्ठया परमात्मैकचिन्तनेनपरमात्मतत्वं ध्यात्वापरमात्मभावं समायातिप्राप्नोतीत्यर्थः ॥ ६० ॥ आत्मतत्वस्य दुर्विज्ञेयता-

क्रियांतरासक्तिमपास्य कीटको ध्यायन्नलित्वं ह्यलिभावमृच्छति ॥ तथैव योगी परमात्मतत्वं
ध्यात्वा समायाति तदेकनिष्ठया ॥६०॥ अतीवसूक्ष्मं परमात्मतत्वं न स्थूलदृष्ट्या प्रतिपत्तुमर्हति ॥
समाधिनात्यंतसुसूक्ष्मवृत्या ज्ञातव्यमार्यैरतिशुद्धबुद्धिभिः ॥६१॥ यथा सुवर्णं पटुपाकशोधितं त्य-
क्त्वा मलं स्वात्मगुणं समृच्छति ॥ तथा मनः सत्वरजस्तमोमलं ध्यानेन संत्यज्य समेति तत्वम् ॥६२॥

माह अतीवेती— परमात्मनः तत्वंस्वरूपं अतीवसूक्ष्मं तत्तत्वंस्थूलदृष्ट्याकश्चिदपि ज्ञातुं नार्हतिनसमर्थोस्ति समाधिनाचित्तैकाग्र्येणात्यं-
तमतिशयेनसुसूक्ष्मा अतिसूक्ष्मवस्तुग्रहणसमर्थावृत्तिः अत्यन्तसूक्ष्मवृत्तिःतयाअत्यंतसुसूक्ष्मवृत्याआर्यैः उत्तमपुरुषैःअतिशुद्धबुद्धिभिर्ज्ञातव्यं
ज्ञातुंयोग्यमित्यर्थः ॥ ६१ ॥ बुद्धिशोधनप्रकारमाह यथेति— यथासुवर्णं पटुपाकशोधितं लवणपाकशोधितं सत् स्वस्थं मलं त्यक्त्वा

स्वात्मगुणं स्वच्छत्वंसमृच्छतिप्राप्नोति अतिनिर्मलंभवतितथामनोध्यानेन सत्वरजस्तमोमलंसंत्यज्य तत्वंनिर्मलतांसमेतिप्राप्नोतीत्यर्थः ॥ ६२ ॥ एवं मनःशुद्धौनिर्विकल्पः समाधिर्भवतीत्याह निरंतरेति— इत्थंउक्तप्रकारेण निरंतराभ्यासवशात्तन्मनःपक्वं शुद्धंस्थिरंयदाब्रह्मणि लीयतेतदासमाधिर्विकल्पवर्जितः निर्विकल्पकः स्वतएवाद्वयानंदरसस्यानुभावकः साक्षात्कारकोभवतीत्यर्थः ॥ ६३ ॥ समाधिना किंभवती-

निरंतराभ्यासवशात्तदित्थं पक्वं मनो ब्रह्मणि लीयते यदा ॥ तदा समाधिः सविकल्पवर्जितस्त-
तोद्वयानंदरसानुभावकः ॥ ६३ ॥ समाधिनानेन समस्तवासनाग्रंथेर्विनाशोखिलकर्मनाशः ॥
अन्तर्बहिः सर्वत एव सर्वदा स्वरूपविस्फूर्तिरयत्नतः स्यात् ॥ ६४ ॥ श्रुतेः शतगुणं विद्यान्मननं
मननादपि ॥ निदिध्यासं लक्षगुणमनंतं निर्विकल्पकम् ॥ ६५ ॥

त्यतआह अनेनसमाधिनासमस्तवासनाजनितग्रंथीनां संशयानांविनाशोभवति तथासंचितसकलकर्मनाशश्च तथांतर्हृदिबहिर्दृश्येचसर्वत्रस-कलपदार्थेषुसर्वदासर्वस्मिन्कालेचस्वरूपभूतसच्चिदानंदात्मस्फूर्तिरयत्नतः अनायासतः स्यात् सदात्मानंदमग्नएवावतिष्ठतइत्यर्थः ॥ ६४ ॥ समाधेः कारणानां श्रवणादीनांतारतम्यमाह श्रुतेरिति—श्रुतेःश्रवणाच्छतगुणं शतगुणफलदं मननंविद्याज्जानीयात् । मननादपिनिदिध्या-

सनंलक्षगुणं तथानिर्विकल्पं निर्विकल्पसमाधिनावस्थानं अनंतकं सद्योब्रह्मतत्त्वावगतिप्रदमित्यर्थः ॥ ६५ ॥ निर्विकल्पसमाधेःफलमाह
निर्विकल्पेति– निर्विकल्पसमाधिना ध्रुवंनिश्चितंस्फुटं प्रत्यक्षतयाब्रह्मतत्त्वमवगम्यते साक्षात्क्रियते अन्यथानिर्विकल्पकसमाध्यभावे ब्र-
॥ ६४ ॥ ह्मतत्वंनावगम्यते किंतदेत्यतआह मनोगतेः चलतयाआत्मतत्वं प्रत्ययांतरविमिश्रितंभवेत् ॥ ६६ ॥ ततःकिंकर्तव्यमित्यतआह अतइति– अ०
यतःसमाध्यभावे ब्रह्मतत्वचिंतनपदार्थांतरचिंतनविमिश्रितंमिलितं स्फुटतयानभाति अतोजितेंद्रियः शांतमनाःसन् निरंतरंप्रतीचि प्रत्य- ९

निर्विकल्पकसमाधिनास्फुटं ब्रह्मतत्वमवगम्यते ध्रुवम् ॥ नान्यथाचलतया मनोगतेः प्रत्ययां-
तरविमिश्रितं भवेत् ॥६६॥ अतः समाधत्स्व यतेंद्रियः सन्निरंतरं शांतमनाः प्रतीचि ॥ विध्वं-
सय ध्वांतमनाद्यविद्यया कृतं सदेकत्वविलोकनेन ॥ ६७ ॥ योगस्य प्रथमद्वारं वाङ्निरोधोऽपरि-
ग्रहः ॥ निराशा च निरीहा च नित्यमेकान्तशीलता ॥ ६८ ॥

गात्मनि कूटस्थे साक्षिणिसमाधत्स्व मनसः स्थितिंकुर्वित्यर्थः ॥ ६७ ॥ ततःकिमित्यतआह सदेकत्वविलोकनेनसतः आत्मन एकत्वदर्शनेन
एकत्वचिंतनेन निर्विकल्पकसमाधिना प्रकाशस्थानीयेन अनाद्यविद्ययाकृतंध्वांतं अंधकारं आत्मदर्शनप्रतिबंधकं विध्वंसय निवारयेत्यर्थः ॥ ६४ ॥
॥ ६७ ॥ किंतर्हि समाधियोगस्य कारणमित्यतआह योगस्येति– योगस्य चित्तवृत्तिनिरोधस्य प्रथमंकारणंवाङ्निरोधो मौनमस्ति ततो

ऽपरिग्रहः संचयाभावः ततोपिनिराशा आशानिवृत्तिः निरीहाचेष्टाभावः नित्यंसदाएकांतवासः ॥ ६८ ॥ तत्तन्निरोधे कारणांतराण्याह एकान्तेति— इंद्रियोपरमणोस्वस्वविषयेभ्य इंद्रियप्रवृत्तिनिवृत्ती एकान्तस्थितिर्हेतुः कारणमित्यर्थः तथाचित्तवृत्तिनिरोधेहेतुर्दमः इंद्रियाणां स्वविषयेभ्यो निवृत्तिरितिशमेन मनसोनिरोधेन अहंवासना विलयं विनाशं यायात् प्राप्नुयात् तेनाहंकारवासनाविलये योगिनो ब्राह्मी-

एकान्तस्थितिरिंद्रियोपरमणे हेतुर्दमश्चेतसः संरोधे करणं शमेन विलयं यायादहंवासना ॥
तेनानंदरसानुभूतिरचला ब्राह्मी सदा योगिनस्तस्माच्चित्तनिरोध एव सततं कार्यः प्रयत्ना-
न्मुनेः ॥ ६९ ॥ वाचं नियच्छात्मनि तं नियच्छ बुद्धौ धियं यच्छ च बुद्धिसाक्षिणि ॥ तं
चापि पूर्णात्मनि निर्विकल्पे विलाप्य शांतिं परमां भजस्व ॥ ७० ॥

ब्रह्मानुभवोद्भूता आनंदरसानुभूतिरचला सदास्यात् तस्मान्मुनेः चित्तनिरोधएव सततंनिरंतरं सदासर्वदाप्रयत्नतः कार्यः करणीयइत्यर्थः ॥ ६९ ॥ तत्रक्रममाह वाचमिति— वाचं भाषणं आत्मनिमनसिनियच्छमनः संकल्पत्यागेन वाचंनियच्छ मनः संकल्पविनाभाषणेप्रवृत्तिरेव नसंभवति तमात्मानं मनोरूपंबुद्धौ नियच्छमनः संकल्पेषु बुद्धिसंमतिंनिवारयेत्यर्थः तांबुद्धिं बुद्धिसाक्षिणिनियच्छ बुद्धिसाक्षिप्रवणांकुरु तं

साक्षिणमपिपूर्णात्मनि प्रविलाप्यएकीकृत्य पूर्णात्मभूतः परमां सदानंदरूपां शान्तिंभजस्व प्राप्नुहीत्यर्थः ॥ ७० ॥ वागादिनियमनेहेतुमाह देहेति— देहप्राणेंद्रियमनोबुद्ध्यादीनां मध्येयैर्यैरुपाधिभिः सहअस्ययोगिनोन्तःकरणवृत्तेः संयोगोभवति तेषांतेषां देहाद्युपाधीनांभावनाऽस्ययोगिनोभवति तद्रूपोभवतीत्यर्थः ॥ ७१ ॥ तन्निवृत्यादेहादिभिः सहवृत्तिसंयोगनिवृत्या मुनेर्मननशीलस्य सम्यक्सुखेनैव सर्वेभ्योदेहादिभ्य उपरमणं उपरतिरौदासीन्यंदृश्यते ततआनंदरसानुभवस्य विप्लवोविप्लवनंविस्तारइत्यर्थः ॥ ७२ ॥ वैराग्यमेवत्यागेहेतुरित्याह

देहप्राणेंद्रियमनोबुध्यादिभिरुपाधिभिः ॥ यैर्यैर्वृत्तेः समायोगस्तत्तद्भावोऽस्य योगिनः ॥ ७१ ॥

तन्निवृत्या मुनेः सम्यक् सर्वोपरमणं सुखम् ॥ संदृश्यते सदानंदरसानुभवविप्लवः ॥ ७२ ॥

अन्तस्त्यागो बहिस्त्यागो विरक्तस्यैव युज्यते ॥ त्यजत्यन्तर्बहिः सङ्गं विरक्तस्तु मुमुक्षया ॥ ७३ ॥

बहिस्तु विषयैः संगं तथांतरहमादिभिः ॥ विरक्त एव शक्नोति त्यक्तुं ब्रह्मणि निष्ठितः ॥ ७४ ॥

अन्तरिति— अंतस्त्यागोअहंकारायत्तविषयवासनात्यागो बहिस्त्यागः विषयभोगत्यागश्चविरक्तस्यैव पुरुषस्ययुज्यते संभवति नाविरक्तस्य तत्रहेतुमाह विरक्तस्तुपुमान् मुमुक्षयामोक्षेच्छयाअंतर्बहिः संगंत्यजतिउपरतोभवतिइत्यर्थः ॥ ७३ ॥ अंतर्बहिःसंगविषयानाह बहिरिति— योविरक्तः सएव बहिस्तु विषयैः संगंतथांतःसंगं अहंकाररागद्वेषादिभिः सहत्यक्तुंशक्नोति ब्रह्मणिनिष्ठितः ब्रह्मणिरतएवनान्यइत्यर्थः ॥७४॥

मुक्तिप्रकारमाहपंचभिः विमुक्तिमिच्छतः पुरुषस्यपक्षिवत् द्वौपक्षौ वैराग्यबोधौविजानीहि त्वं हेविचक्षण विचित्र बुद्धे सौधं उच्चमंदिरं तस्याग्रं शिखरंसौधाग्रं तत्रलताफलवती वल्लीविमुक्तिरेव सौधाग्रलताविमुक्ति सौधाग्रलता तस्याअधिरोहणं तत्रस्थितिः तदधिरोहणं ताभ्यां बोधवैराग्यपक्षाभ्यां विन ानसिध्यति नान्यतरेणसिद्ध्यति अन्यतरेण केवलवैराग्येण केवलबोधेननसिद्ध्यतीत्यर्थः ॥ ७५ ॥ तत्रोपपत्तिमाह

वैराग्यबोधौ पुरुषस्य पक्षिवत्पक्षौ विजानीहि विचक्षणत्वम् ॥ विमुक्तिसौधाग्रलताधिरोहणं ताभ्यां विना नान्यतरेण सिध्यति ॥ ७५ ॥ अत्यन्तवैराग्यवतः समाधिः समाहितस्यैव दृढप्रबोधः ॥ प्रबुद्धतत्वस्य हि बंधमुक्तिर्मुक्तात्मनो नित्यसुखानुभूतिः ॥ ७६ ॥ वैराग्यान्नपरं सुखस्य जनकं पश्यामि वश्यात्मनस्तच्चेच्छुद्धतरात्मबोधसहितं स्वाराज्यसाम्राज्यधुक् ॥ एतद्द्वारमजस्रमुक्तियुवतेर्यस्मात्त्वमस्मात्परं सर्वत्रास्पृहया सदात्मनि सदा प्रज्ञां कुरु श्रेयसे ॥७७॥

अत्यंतेति— अत्यंतवैराग्यवतः पुरुषस्यसमाधिर्भवति समाहितस्यसमाधिनिष्ठस्यैव दृढप्रबोधोभवति प्रबुद्धतत्वस्यपुरुषस्यहिबंधमुक्तिर्भवति तस्यैवमुक्तात्मनो नित्यसुखस्यात्मानंदस्यानुभूतिः साक्षात्कारोभवतीत्यर्थः ॥ ७६ ॥ वैराग्यमाहात्म्यमाह वराग्येति— वैराग्यात्परं सुखस्यजनकं सुखकारणंवश्यात्मनः वशीकृतमनसः पुरुषस्य अहंनपश्यामिचेत् यदितद्वैराग्यंशुद्धतरात्मबोधसहितं अत्यंतनिर्मलात्मज्ञानस-

हितं भवेत्तदास्वाराज्यसाम्राज्यधुक् स्वस्मिन् स्वस्वरूपेराजते इति स्वराट्स्वराजोभावः स्वाराज्यं अपरोक्षमात्मज्ञानं सम्यग्राजतेइति
सम्राट्स्वतंत्रोराजातस्यभावः साम्राज्यं स्वाराज्यमेव साम्राज्यंस्वाराज्यसाम्राज्यंतद्दोग्धिपूरयति स्वाराज्यसाम्राज्यधुक् अखंडानंदात्मसा-
क्षात्काररूपाखण्डैकराज्यप्रदमित्यर्थः एतदेवबोधसहितं वैराग्यं अजस्रमुक्तिर्विदेहमुक्तिः साएवयुवतिः विषयासक्तमनोमोदप्रमोदजनक-
युवतिरिवात्मसाक्षात्कारवतः परमानंदजननीयुवतिः तस्या द्वारंप्राप्तिसाधनमित्यर्थः यस्मादेवमस्मात्त्वं सर्वत्रास्पृहयापरवैराग्येणयुक्तःसन्

आशां छिंधि विषोपमेषु विषयेष्वेष्वेव मृत्योः कृतिस्त्यक्त्वा जातिकुलाश्रमेष्वभिमतिं मुञ्चा-
तिदूरात्क्रियाः ॥ देहादावसति त्यजात्मधिषणं प्रज्ञां कुरुष्वात्मनि त्वं द्रष्टास्यमनोसि
निर्द्वयपरं ब्रह्मासि यद्वस्तुतः ॥ ७८ ॥

श्रेयसेमोक्षाय सदात्मनिसद्रूपे स्वात्मनिसदानिरंतरं प्रज्ञांस्वात्मबोधरूपांकुरु संपादयेत्यर्थः ॥ ७७ ॥ आत्मज्ञानोपायमाह अशामिति—
विषसदृशेषु विषयेषु आशां आसक्तिंछिंधिदूरीकुरु एषाआशैव मृत्योः सृतिः मृत्युमार्गः कृतिरितिपाठेमृत्युमूर्तिरित्यर्थः तथाजातिकुला-
श्रमेषु अभिमतिं अभिमानं त्यक्त्वा जात्याश्रमरहितस्य कर्मासंभवात् क्रियाः कर्माणि अतिदूरान्मुंच दूरतस्त्यजेत्यर्थः । ततः अतिमिथ्या-

भूतेदेहादौ आत्मधिषणां आत्मबुद्धिं त्यज आत्मनि साक्षिरूपात्मनि स्वस्वरूपे प्रज्ञां आत्मबुद्धिं कुरुष्वसंपादय कुतः साक्षिणि आत्मबुद्धिं कुर्यामित्यत आह यतस्त्वं द्रष्टासि अमनोसिमनसोभिन्नो वस्तुतो निर्द्वयं परंब्रह्मासीति॥७८॥तर्हि किंकुर्यामित्यतआह लक्ष्यइति— तत्वंपद लक्ष्ये ब्रह्मणि दृढतरं मानसं आत्मतया संस्थाप्य तथा च बाह्येंद्रियं ज्ञानकर्मात्मकं स्वस्थाने निवेश्य वचनदर्शनाद्यभिनिवेशरहितं

लक्ष्ये ब्रह्मणि मानसं दृढतरं संस्थाप्य बाह्येंद्रियं स्वस्थाने विनिवेश्य निश्चलतनुश्चोपेक्ष्य
देहस्थितिम् ॥ ब्रह्मात्म्यैक्यमुपेत्य तन्मयतया चाखण्डवृत्त्यानिशं ब्रह्मानंदरसं पिबात्मनि
मुदा शून्यैः किमन्यैर्भृशम् ॥ ७९ ॥ अनात्मचिंतनं त्यक्त्वा कश्मलं दुःखकारणम् ॥ चिंत-
यात्मानमानंदरूपं यन्मुक्तिकारणम् ॥ ८० ॥

कृत्वा निश्चलतनुः सन् देहस्थितिं देहस्थितिचिंतां प्रारब्धं पुष्यति तनुमित्युपेक्ष्य ब्रह्मणा आत्मना ऐक्यमुपेत्य प्राप्य तन्मयतया ब्रह्मात्मतया अखण्डवृत्त्या एकाकारया वृत्त्या अनिशं निरंतरं आत्मनि स्वस्वरूपे विद्यमानं स्वरूपभूतं ब्रह्मानंदरसं मुदा सुखेन पिब अन्यैः शून्यैः परमार्थफलरहितैः कर्मभिः किं न किमपीत्यर्थः ॥ ७९ ॥ किंच कश्मलं दुष्कर्मरूपं दुःखकारणं अनात्मनां देहादीनां चिंतनं त्यक्त्वा

आनंदरूपमात्मानं चिंतय कुत इत्यत आह यत् यस्मादात्मचिंतनं मुक्तिकारणं तस्मादित्यर्थः ॥ ८० ॥ आत्मचिंतने युक्तिमाह एषइति— एष आत्मा स्वयंज्योतिः स्वयमेव प्रकाशते नास्य दर्शने प्रमाणांतरापेक्षा यत अशेषसाक्षी सर्वप्रत्ययद्रष्टा कुत्रायं द्रष्टव्यस्तर्हि विज्ञा-



नकोशविज्ञानरूपा बुद्धिरेव कोश उपलब्धिस्थानं यस्य स विज्ञानकोशः बुद्ध्यवभासकत्वेन द्रष्टव्य इत्यर्थः । असद्विलक्षणं बुद्ध्याद्यना-



एष स्वयंज्योतिरशेषसाक्षी विज्ञानकोशो विलसत्यजस्रम् ॥ लक्ष्यं विधायैनमसद्विलक्षणमख- 
ण्डवृत्यात्मतयानुभावय ॥ ८१ ॥ एतमच्छिन्नयावृत्त्या प्रत्ययांतरशून्यया ॥ उल्लेखयन्
विजानीयात्स्वस्वरूपतया स्फुटम् ॥ ८२ ॥ अत्रात्मत्वं दृढीकुर्वन्नहमादिषु संत्यजन् ॥
उदासीनतया तेषु तिष्ठेत्स्फुटघटादिवत् ॥ ८३ ॥

त्मजडप्रपंचातिरिक्तं जलार्कभिन्नं जलार्कवास्तवस्वरूपमाकाशार्कमिव लक्ष्यं विधाय अहमस्मीति तत्रात्मबुद्धिं विधाय अखंडवृत्या एकाकारवृत्त्याआतमतया स्वरूपं चिंतयेत्यर्थः ॥८१॥ किंच एतमात्मानं अच्छिन्नया एकाकारया वृत्या एकाकारत्वमेवाह प्रत्ययांतरशून्यया विषयांतरचिंतनरहितया उल्लेखयन् ध्यायन् एनमेव स्फुटं स्वस्वरूपतया विजानीयादिति ॥ ८२ ॥ तत्र युक्तिमाह अत्रेति—अत्रो- 

क्तस्वरूपे साक्षिणि आत्मत्वं आत्मभावं दृढीकुर्वन् अहमादिषु अहंकारादिषु आत्मभावं सम्यक्तया त्यजन् तेषु अहमादिषु देहपुत्रवित्ताद्यंतेषु उपचितेष्वपचितेषु उदासीनतया तिष्ठेत् कथं स्फुटघटादिवत् यथाघटे स्फुटिते विदीर्णे द्रष्टा नर उदासीनतया पश्यन् तिष्ठति न शोचति अहमेव विदीर्ण इति एवमहंकारास्पदेषु देहादिषु उपचितेष्वपचितेषु उदासीनतया तिष्ठेदित्यर्थः ॥ ८३ ॥ पुनरप्येतदेवाह विशुद्धमिति— विशुद्धं विचारशुद्धं अंतःकरणं अवबोधमात्रे ज्ञानस्वरूपे स्वस्वरूपभूते साक्षिणि

विशुद्धमन्तःकरणं स्वरूपे निवेश्य साक्षिण्यवबोधमात्रे ॥ शनैः शनैर्निश्चलतामुपानयन्पूर्णं स्वमेवानुविलोकयेत्ततः ॥ ८४ ॥ देहेन्द्रियप्राणमनोहमादिभिः स्वाज्ञानक्लृप्तैरखिलैरुपाधिभिः ॥ विमुक्तमात्मानमखण्डरूपं पूर्णं महाकाशमिवावलोकयेत् ॥ ८५ ॥

निवेश्य संस्थाप्यतदेवांतःकरणं शनैः शनैः निश्चलतामुपानयन् प्रापयन् ततः स्वमात्मानमेव पूर्णमनुविलोकयेत् पश्येदित्यर्थः ॥ ८४ ॥ कथं पश्येदित्यत आह देहेति— स्वज्ञानक्लृप्तैः स्वाज्ञानरचितैर्देहेन्द्रियप्राणमनोहमादिभिरखिलैरुपाधिभिर्मुक्तं रहितं स्वात्मानं महाकाशमिवाखंडरूपं पूर्णं सर्वगतमवलोकयेत्पश्येदित्यर्थः ॥ ८५ ॥ अत्र दृष्टांतमाह घटेति—यथा गगनमाकाशं घटकलशा-

द्युपाधिस्थमपि घटाकाशेत्यादिनामभिर्व्यवह्रीयमाणमपि घटकलशादिभिरुपाधिशतैर्विमुक्तं रहितं एकमेव भवति न विविधं वस्तुतोनेकरूपं भवति तथैव शुद्धं परमात्मतत्वं अहंकाराद्युपाधिभिर्विमुक्तं रहितमेकमेवेत्यर्थः ॥ ८६ ॥ के लोकास्तर्हिसत्या इत्याशंक्य न केपीत्याह ब्रह्मेति—ब्रह्मादिस्तंबपर्यंता ब्रह्मलोकमारभ्य स्तंबपर्यंताः स्तंबो गुल्मे इति स्थावरांता इति सर्वेलोकाः शरीराणि मृषा मात्रा

घटकलशकुसूलसूचिमुख्यैर्गगनमुपाधिशतैर्विमुक्तमेकम् ॥ भवति न विविधं तथैव शुद्धं
परमहमादिविमुक्तमेकमेव ॥ ८६ ॥ ब्रह्मादिस्तम्बपर्यंता मृषामात्रा उपाधयः ॥ ततः पूर्णं
स्वमात्मानं पश्येदेकात्मनास्थितम् ॥ ८७ ॥ यत्र भ्रांत्या कल्पितं तद्विवेके तत्तन्मात्रं नैव
तस्माद्विभिन्नम् ॥ भ्रांतेर्नाशे भाति दृष्टाहितत्वं रज्जुस्तद्वद्विश्वमात्मस्वरूपम् ॥ ८८ ॥

उपाधय एव यतः ततः स्वमात्मानं एकात्मना स्थितं पूर्णं पश्येदित्यर्थः ॥ ८७ ॥ कथमेतन्नामरूपं जगत् भातीत्याशंक्य रज्जुसर्पवद्भ्रांत्यैव भातीत्याह यत्रेति— यद्वस्तु यस्मिन्नधिष्ठाने भ्रांत्या कल्पितं भवति तद्वस्तु तद्विवेके तस्याधिष्ठानस्य विवेके ज्ञाने सति तन्मात्रं अधिष्ठानमात्रमेवावशिष्यते तस्मादधिष्ठानाद्विभिन्नं नावलोक्यते यथा रज्जौ सर्पभ्रांतेर्नाशे सति दृष्टा या रज्जुः सैव अहितत्वं स्वर्पस्वरूपं

भाति इयमेव रज्जुः सैव अहितत्वं सर्पस्वरूपं भाति इयमेव रज्जुः सर्पाकारेण प्रतीताभूत् इति निश्चीयते एवं सत्यात्मना दृष्टमेत-द्विश्वं आत्मस्वरूपज्ञानेसति आत्मस्वरूपमेव भाति नात्मनः पृथगिति ॥ ३८ ॥ एतदेव निगमयति स्वयमिति— स्वयमात्मैव ब्रह्मा स्वयं विष्णुः स्वयमिंद्रः स्वयमेव शिवः इदं सर्वं विश्वं जगदपि स्वयमेव आत्मैव जगदाकारेण प्रतीयते स्वस्मात् आत्मनः

स्वयं ब्रह्मास्वयं विष्णुः स्वयमिंद्रः स्वयं शिवः॥ स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किंचन ॥ ८८ ॥ अंतः स्वयं चापि बहिः स्वयं च स्वयं पुरस्तात्स्वयमेव पश्चात् ॥ स्वयं ह्यवाच्यां स्वयमप्युदीच्यां तथोपरिष्टात्स्वयमप्यधस्तात् ॥ ८० ॥ तरंगफेनभ्रमबुद्बुदादि सर्वं स्वरू-पेण जलं यथा तथा ॥ चिदेव देहाद्यहमंतमेतत्सर्वं चिदेवैकरसं विशुद्धम् ॥ ८१ ॥

अन्यत् भिन्नं न किंचनापि विद्यते यथा स्वप्न इति ॥ ८९ ॥ सर्वत्र सर्वरूपं चात्मैवेत्याह अन्तरिति— यथा स्वप्ने अंतर्बहिः सर्वदिक्षु च स्वप्नद्रष्टैवास्ति एवमन्तर्बहिश्च पुरस्तात् अग्रे पश्चाच्च अवाच्यां दक्षिणे उदीच्यामुत्तरदिशि तथोपरिष्टादूर्ध्वदिशि तथाधस्तात्सर्वत्र सर्वरूपश्च आत्मैवेत्यर्थः ॥ ९० ॥ तत्र दृष्टांतमाह तरंगेति— यथा तरंगादिसर्वस्वरूपेण जलमेव तथा देहाद्यहंकारपर्यंतं चिदेव सर्व-

 मिदंदृश्यमानं च विशुद्धमेकरसं चिदेव नान्यत्तस्मादिति ॥ ९१ ॥ अन्यच्चाह सदिति— प्रकृत्या मायायाः परसीम्नि अधिष्ठानरूपेण स्थि- 
तवतः सतः अन्यत् किंचिदपि नास्त्येव इदं सर्वं जगत् यद्वागादिभिरिंद्रियैरवगतं तथा मनसावगतं अनुभवविषयतां प्राप्तं सदेव सद्रूपं
॥ ६९ ॥ आत्मैव अत्र दृष्टांतः घटकलशादिनामभिरवगतं सर्वं किं मृत्स्नाया मृत्तिकायाः पृथक् विद्यते किंतु नास्त्येव एवं यस्तु मायारूपया 



सदेवेदंसर्वं जगदवगतं वाङ्मनसयोः सतोन्यन्नास्त्येव प्रकृतिपरसीम्नि स्थितवतः ॥ पृथक्
किंमृत्स्नाया कलशघटकुंभाद्यवगतं वदत्येषभ्रांतस्त्वमहमिति मायामदिरया ॥ ९२ ॥ क्रिया-
समभिहारेण यत्र नान्यदिति श्रुतिः ॥ ब्रवीति द्वैतराहित्यं मिथ्याध्यासनिवृत्तये ॥ ९३ ॥

मदिरया भ्रांतः एष अहमिति त्वमिति नानाकारं वदति नात्मज्ञ इत्यर्थः ॥ ९२ ॥ अत्र छांदोग्योपनिषदि सनत्कुमारवाक्यं श्रुतिरूपं
प्रमाणमाह ॥ क्रियेति—यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेत्यादि क्रियासमभिहारेण पश्यत्यादि क्रियाणां पुनः 
पुनरुच्चारेण श्रुतिः मिथ्याध्यासनिवृत्तये द्वैतराहित्यं ब्रवीति इति ॥ ९३ ॥ ब्रह्मणः स्वस्वरूपत्वाद्ध्येयत्वं नास्तीत्याह आकाशेति—यद्वस्तु स्वस्मा-

द्भिन्नं भवति तद्वैद्यमपि भवति वेद्यस्य विषयत्वात् अयं मुमुक्षुः स्वयमेव परं ब्रह्मास्ति अतः स्वस्वरूपं किंबोध्यमस्ति किंतु नास्ति बोध्यं तस्यस्वरूपत्वे न बुद्धत्वात् कीदृशं तदात्मतत्वमित्यत आह आकाशवन्निर्मलं तथा निर्विकल्पं निःसीम मर्यादारहितं परिपूर्णमित्यर्थः पूर्णत्वादेव निष्पंदनं चलनादिरहितं तथा निर्विकारं अंतर्बहिः शून्यं अपरिच्छिन्नत्वात् अनन्यं अन्यभाववर्जितं अद्वितीयं न द्वितीयं यस्मा-

आकाशवन्निर्मलनिर्विकल्पनिःसीमनिष्पंदनर्निर्विकारम् ॥ अंतर्बहिः शून्यमनन्यमद्वयं स्वयं
परंब्रह्म किमस्ति बोध्यम् ॥ ९४ ॥ वक्तव्यं किमु विद्यतेत्र बहुधा ब्रह्मैव जीवः स्वयं ब्रह्मै-
तज्जगदाततं नु सकलं ब्रह्माद्वितीयं श्रुतिः ॥ ब्रह्मैवाहमिति प्रबुद्धमतयः संत्यक्तबाह्याः
स्फुटं ब्रह्मीभूय वसंति संततचिदानंदात्मनैतद्ध्रुवम् ॥ ९५ ॥

द्भिन्नमस्ति अतो न बोध्यमितयर्थः ॥ ९४ ॥ अत्र ब्रह्मज्ञाने बहुधा वक्तव्यं किमु विद्यते किंतु नैव किंचिद्वक्तव्यमस्ति कस्मात् यस्मात् अयं जीवः स्वयं ब्रह्मैव न केवलं जीव एव ब्रह्म किं तर्हि एतत आततं विस्तृतं सर्वं जगत् नु वितर्के यतो ब्रह्मैव तत्र मानमाह श्रुतिर्यतः एकमेवाद्वितीयमिति ब्रह्मणोऽद्वितीयत्वमाह न केवलं श्रुतिरेव मानं किंतु विद्वदनुभवोपि प्रबुद्धमतयः स्फुटं संत्यक्तबाह्याः त्यक्त-

बहिर्दृष्टयः संततचिदात्मनैव ध्रुवं ब्रह्मीभूय वसंतीति ॥ ९५ ॥ कथं तर्हि वर्तयमित्यत आह जहाति- अस्मिन् देहे मलपूर्णकोशे गृहे अहं बुद्धयुत्थापितां अहंकारजनितां आशां जहि त्यजेत्यर्थः ततः पश्चाल्लिंगदेहे सूक्ष्मशरीरेपि प्रसभं शीघ्रं आशां जहि यत इदं अनिलकल्पं वायुवच्चंचलं क्षणिकमित्यर्थः आत्मा निगमगदितकीर्त्तिर्वेदान्तप्रतिपादितो नित्यं सदा आनन्दमूर्तिश्चास्ति तं स्वयमहमेवास्मी-

जहि मलमयकोशे हंधियोत्थापिताशां प्रसभमनिलकल्पे लिंगदेहेपि पश्चात् ॥ निगमगदितकीर्तिं नित्यमानंदमूर्तिं स्वयमिति परिचीय ब्रह्मरूपेण तिष्ठ ॥ ९६ ॥ शवाकारं यावद्भजति मनुजस्तावदशुचिः परेभ्यः स्यात्क्लेशो जननमरणव्याधिनिलयः ॥ यदात्मानं शुद्धं कलयति शिवाकारमचलं तदा तेभ्यो मुक्तो भवति हि तदाह श्रुतिरपि ॥ ९७ ॥

ति परिचीयनिश्चयं कृत्वा ब्रह्मरूपेणावतिष्ठ स्थितोभवेत्यर्थः ॥ ६ ॥ अत्र युक्तिमाह शवेति— मनुजः पुरुषः यावत् शवाकारं मृतदेहतुल्यं स्थूलशरीरं भजति आत्मत्वेन मन्यते तावदशुचिरपवित्रो भवति तथा परेभ्यः देहसंबंधिभ्यः पुत्रमित्रशत्रुभ्यः क्लेशः स्यात् देहाभिमानात् जननमरणव्याधिनिलयोपि स्वयमेव स्यात् यदा च शिवाकारं परमानन्दमूर्तिं अचलं शुद्धं ब्रह्मैवात्मानं कलयति निश्चिनोति

तदा तेभ्यो जननमरणादिक्लेशेभ्यो मुक्तो भवति श्रुतिरप्याह मुण्डकोपनिषदि तदा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति इति ॥ ९७ ॥ अन्यां युक्तिमाह स्वात्मनीति— स्वात्मनि आरोपितस्य अशेषवस्तूनामाभासस्य निरासत उक्तयुक्तितो वाधात् अयं जीवः स्वयमेवाद्वयमक्रियं पूर्णं परं ब्रह्मैवाविर्भवति इत्यर्थः ॥ ९८॥ तत्रोपपत्तिमाह समाहितायामिति—सति ब्रह्मणि निर्विकल्पे परा-

स्वात्मन्यारोपिताशेष भासवस्तुनिरासतः ॥ स्वयमेव परं ब्रह्म पूर्णमद्वयमक्रियम् ॥ ३९८ ॥
समाहितायां सति चित्तवृत्तौ परात्मनि ब्रह्मणि निर्विकल्पे ॥ न दृश्यते कश्चिदयं विकल्पः
प्रजल्पमात्रः परिशिष्यतेतः ॥ ३९९ ॥ असत्कल्पो विकल्पोयं विश्वमित्येकवस्तुनि ॥ निर्विकारे
निराकारे निर्विशेषे भिदाकुतः ॥ ४०० ॥

त्मनि चित्तवृत्तौ समाहितायां अयं कश्चित् विकल्पो नावशिष्यते किन्तु ततः प्रजल्यमात्रः नाममात्रएव विकल्पोऽवशिष्यते नात्मदृष्टिबाधक इत्यर्थः ॥ ९९ ॥ किं चायं विश्वमिति विकल्पः वुद्ध्यादिप्रपंचोऽसत्कल्पः मिथ्याभूतः स्वप्नवत् निर्विकारे विकाररहिते निराकारे आकारमूर्तिरहिते निर्विशेषे एकरसे आत्मवस्तुनि कुतः कारणात् भिदा भेदः स्यात् कारणाभावात् न कुतोपीत्यर्थः ॥ ४०० ॥

पुनःभेदाभावसाधकविशेषणांतराण्याह द्रष्टृत्यादिचतुर्भिः—द्रष्टृदर्शनदृश्यादिभावशून्ये एकवस्तुनि स्वात्मनि भिदा कुतइति पूर्ववत् आत्मनः स्वतंत्रत्वात् दृश्यत्वं दर्शनत्वं न संभवति दृश्यदर्शनयोरात्मातिरिक्तसत्वाभावात् दृश्याभावे द्रष्टृत्वमपि न संभवति भेदकाभावात्भेदाभाव-
॥७१॥ इत्यर्थः ॥ १०१ ॥ पुनश्च कल्पार्णवइव प्रलयकालसमुद्रइव अत्यंतपरिपूर्णे एकवस्तुनि भिदाकुतः ॥ १०२ ॥ पुनश्च तेजसीति— यथा तेज- अ० ६

द्रष्टृदर्शनदृश्यादि भावशून्यैकवस्तुनि ॥ निर्विकारे निराकारे निर्विशेषे भिदाकुतः ॥४०१॥
कल्पार्णवइवात्यंतपरिपूर्णैकवस्तुनि ॥ निर्विकारे निराकारे निर्विशेषे भिदाकुतः ॥ २ ॥
तेजसीव तमोयत्र प्रलीनं भ्रांतिकारणम् ॥ अद्वितीये परे तत्वे निर्विशेषे भिदाकुतः ॥ ३ ॥
एकात्मके परे तत्वे भेदवार्ता कथं वसेत् ॥ सुषुप्तौ सुखमात्रायां भेदः केनावलोकितः ॥ ४ ॥

सितमः प्रलीयते एवं यत्र सर्वाधिष्ठाने अद्वितीये निर्विशेषे एकरसे परे तत्वे भ्रांतिकारणमज्ञानं प्रलीनं एकत्वदर्शनेनादृश्यतां प्राप्तं तत्र भिदा कुतः न कुतोपीत्यर्थः ॥ १०३ ॥ पुनराह एकेति—यतः परं तत्त्वमेकात्मकमतस्तस्मिन्परे तत्वे भेदवार्तापि कथं वसेत् किं पुनर्भेद ॥७१॥

इति अत्र दृष्टान्तमाह सुषुप्ताविति- सुखमात्रायां सुखैकरूपायां सुषुप्तौ भेदः केनावलोकितो न केनापीत्यर्थः ॥ १०४ ॥ कदा भेदनिवृत्तिर्भवतीत्यतआह नह्यस्तीति- परतत्वमात्मस्वरूपं तस्य बोधात् अवबोधात् विज्ञानादनंतरं सद्रूपे आत्मनि निर्विकल्पे ब्रह्मणि विश्वं जगत् नह्यस्ति कालत्रयेपि नास्तीत्यर्थः कथमेतदित्यत आह गुणे रज्जुरूपे ज्ञाते यथा अहिः सर्पः केनापि नहि निरीक्षितो मृगतृष्णि

नह्यस्ति विश्वं परतत्वबोधात्सदात्मनि ब्रह्मणि निर्विकल्पे ॥ कालत्रये नाप्यहिरीक्षितो गुणे नह्यम्बुबिंदुर्मृगतृष्णिकायाम् ॥ ५ ॥ मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ इति ब्रूते श्रुतिः साक्षात्सुषुप्तावनुभूयते ॥ ६ ॥ अनन्यत्वमधिष्ठानादारोप्यस्य निरीक्षितम् ॥ पण्डितै रज्जुसर्पादौ विकल्पो भ्रांतिजीवनः ॥ ७ ॥

कायां मरौ चंद्रांशुप्रकाशे नह्यंबुबिंदुरपिकेनापि न निरीक्षत एवमिदमपि विश्वं नास्तीत्यर्थः ॥ अत्र श्रुतिं प्रमाणयति मायामात्रमिति- इदं द्वैतं मायामात्रं अविद्यमानमेवावभासते तथा च द्वैतस्याविद्यमानत्वेऽद्वैतमेवावशिष्यते अतः परमार्थतः अद्वैतमेवेति साक्षात्स्वयं श्रुतिर्ब्रूते न केवलं श्रुतिरेव प्रमाणं किंतु सुषुप्तौ घोरनिद्रायामद्वैतमेव सर्वैरनुभूयते ॥ ६ ॥ अत्रोक्तं दृष्टान्तं पुनराह पष्टेय अनन्यत्वमिति-

आरोप्य स्याध्यस्तस्यसर्पादेः अधिष्ठानाद्रज्ज्वादेरनन्यत्वमभिन्नत्वं पण्डितैर्विद्वद्भिर्निरीक्षितं कुत्र निरीक्षितमित्यतआह रज्जुसर्पादौ वि-
कल्पः सर्पोयमिति भ्रमः स भ्रांतिजीवनः भ्रांत्या जीवनमस्ति त्वमस्येतिभ्रांतिजीवनः भ्रांतिविनाशे विकल्पोपि नश्यतीत्यर्थः ॥ ७ ॥
वैराग्यात्मविबोधरञ्जितमतिर्मुञ्चातिदूरात्क्रियाः त्यक्त्वारूढतराभिमानमचलं कुर्यात्समाधिंसदा ॥ देहाहंमतिवासनानविलयं यायात्समाधिं-
विनेत्युक्तं सद्गुरुणा विवेककमणौ षष्ठाभिधेध्यायके ॥ ६ ॥ इति श्रीजगाधरीनगरस्थसारस्वतवंशावतंसश्रीमन्मिश्रहरिधनपुरोहितात्म-

चित्तमूलो विकल्पोयं चित्ताभावे न कश्चन ॥ अतश्चित्तं समाधेहि प्रत्यग्रूपे परात्मनि ॥ ८ ॥
किमपि सततबोधं केवलानन्दरूपम् निरुपममतिवेलं नित्यमुक्तं निरीहम् ॥ निरवधिगगनाभं
निष्कलं निर्विकल्पं हृदि कलयति विद्वान् ब्रह्मपूर्णं समाधौ ॥ ९ ॥

जवेदान्तनिष्ठपण्डितहरिनामदत्तविरचितायां विवेकचूडामणिटीकायां सुबोधिन्यां आत्मतादात्म्यरूपसत्वापत्तिफलभूता संसक्तिपञ्चम-
भूमिकाजीवन्मुक्तिनिरूपणोनामषष्ठोऽध्यायः ॥ ६ ॥ वृत्त्युपायंदार्ढ्यायाह तर्हिविकल्पनिवृत्तिः कथंस्यादित्यतआह चित्तेति—अयंविकल्पः
संसारभ्रमश्चित्तमूलः यदाचित्तेनचिंत्यतेतदास्तिचिंतनाभावेनास्तीत्यर्थः अतः कारणात् चित्तं प्रत्यग्रूपेसाक्षिरूपे परात्मनिसमाधेहिस-
माधिनास्थिरीकुर्वित्यर्थः ॥ ८ ॥ समाधौकिंचिंत्यमित्यत्रसदाचारमाह किमपीति—किमपीत्यचिंत्यमाहात्म्यंसततबोधं सदैकरसज्ञानस्व-

रूपं केवलानन्दरूपं अतिकेवलं अत्यंतनिरुपमं उपमानरहितं नित्यमुक्तं सदामुक्तमेव निरीहंचेष्टारहितं गंतव्याभावात् निरवधिमर्यादा-रहितंगगनाभं आकाशवत्सर्वगतं निष्कलं वृद्धिक्षयरहितं निर्विकल्पं संशयरहितं एतादृशं पूर्णं ब्रह्म विद्वान्समाधौ हृदि कलयति स्वस्वरूपत-येकाकारेण भावयतीत्यर्थः ॥ ९ ॥ पुनस्तदेवाह प्रकृतीति—प्रकृतिः कारणंविकृतिः कार्यं ताभ्यांभिन्नं तद्द्रष्टारमित्यर्थःभावनातीतभावंविषयता-

प्रकृतिविकृतिशून्यं भावनातीतभावं समरसमसमानं मानसंबंधदूरम् ॥ निगमवचनसिद्धं नि-त्यमस्मत्प्रसिद्धं हृदिकलयतिविद्वान् ब्रह्मपूर्णं समाधौ ॥ १० ॥ अजरममरमस्ताभाववस्तु-स्वरूपंस्तिमितसलिलराशिप्रख्यमाख्याविहीनम् ॥ समितगुणविकारं शाश्वतं शान्तमेकं हृदि-कलयति विद्वान् ब्रह्मपूर्णंसमाधौ ॥ ११ ॥

क्रांतस्वरूपं अविषयतयैववेद्यमित्यर्थः समरसमेकरसं स्वगतभेदशून्यं मानसं संस्कृतमनसैवज्ञेयं बंधदूरं बंधोदूरो यस्माद्बंधरहितमित्यर्थः निगमवचनसिद्धं वेदांतैकवेद्यं नित्यमस्मत्प्रसिद्धं सदास्मद्दृशानां प्रसिद्धंहृदिस्थितमित्येतादृशंपूर्णंब्रह्म विद्वान् हृदिभावयतीत्यर्थः ॥ १० ॥ तत्रैवविशेषणांतराण्याह अजरेति— अजरं जराहितं अमरं मृत्युरहितं अस्ताभावोविनाशाभावोविद्यते यस्य तदस्ताभावं वस्तुतदेवस्वरूपं

यस्य तत् अस्ताभाववस्तुस्वरूपंस्तिमितोनिश्चलोयः सलिलराशिः समुद्रस्तत्प्रख्यं तत्तुल्यं निश्चलमित्यर्थः आख्याविहीनं नामरहितं शमि-
तगुणविकारं शमिताविलयं प्राप्ता गुणानां विकारायस्मिन् तच्छमितगुणविकारं समितेतिपाठे संपूर्णतयागताविगता गुणविकाराय-
स्मात्तत्समितगुणविकारं शाश्वतं सदैकरसंशांतं मायागुणकृतक्षोभरहितं एकंअद्वयं एतादृशं पूर्णं ब्रह्मविद्वान् समाधौ हृदिभावयतीत्य-

समाहितांतःकरणः स्वरूपे विलोकयात्मानमखंडवैभवम् ॥ विच्छिंधि बंधं भवगंधगंधितं
यत्नेन पुंस्त्वं सफलीकुरुष्व ॥ १२ ॥ सर्वोपाधिविनिर्मुक्तं सच्चिदानंदमद्वयम् ॥ भावयात्मा-
नमात्मस्थं न भूयः कल्पसेऽध्वने ॥ १३ ॥

र्थः ॥ ११ ॥ कर्तव्यार्थमुपदिशति समाहितेति— उक्तप्रकारेण स्वरुपेसमाहितांतःकरणस्त्वं अखंडवैभवं अखंडप्रभावमात्मानं विलोकय-
पश्येति भवस्यसंसारस्य गंधोदुःखं तेनदुःखेन गंधितं युक्तं बंधं अहंकाराख्यं विच्छिंधि निवर्तयेति रीत्यासदायत्नेन सदाभ्यासेनपुस्त्वंपुंज- ॥ ७३ ॥
न्मलाभं सफलीकुरुष्व सार्थिकं कुर्वित्यर्थः ॥ १२ ॥ पुनस्तमेवध्येयमात्मानंविशिनष्टि सर्वेति—सर्वोपाधिविर्निमुक्तमद्वयं सच्चिदानन्दमात्मानं

आत्मस्थं भावयचिंतयेति ततो भूयः पुनरध्वने संसारमार्गाय न कल्प्यसेयोग्यो न भविष्यसीत्यर्थः ॥ १३ ॥ ततोदेहाध्यासोनिवर्तिष्यते इत्याह इदंशरीरंपुंसः—फलानुभूत्याफलस्य प्रारब्धकर्मफलस्य सुखदुःखादेरनुभूत्यानुभवेन हेतुना छायेव परिदृश्यमानमपिशववत मृतशरीरवत् निरस्तंत्यक्ताभिमानं महात्माविद्वान् पुनर्नसंधत्ते न स्मरतीत्यर्थः ॥ १४ ॥ ततः किंकरणीयमित्यतआह सततेति—त्वंतु सतत-

छायेवपुंसः परिदृश्यमान माभासरूपेण फलानुभूत्या॥ शरीरमाराच्छववन्निरस्तं पुनर्नसंधत्तइ दंमहात्मा ॥१४॥ सततविमलबोधानंदरूपंसमेत्य त्यजजडमलरूपोपाधिमेतंसुदूरे ॥ अथ पुनरपिनैषस्मर्यतांवांतवस्तु स्मरणविषयभूतं कल्प्यते कुत्सनाय॥ १५ ॥ समूलमेतत्परिदह्यवन्हौ सदात्मनिब्रह्मणिनिर्विकल्पे॥ ततःस्वयंनित्यविशुद्धबोधानंदात्मनातिष्ठतिविद्वरिष्ठः ॥ १६ ॥

विमलबोधानंदस्वरूपं आत्मस्वरूपं समेत्यप्राप्य एनं जडमलरूपोपाधिं सुदूरेअत्यंतदूरे त्यजअथेत्यनंतरं एष उपाधिः पुनर्नस्मर्यताम् यतोवांतवस्तुस्मरणविषयभूतं कुत्सनायनिंदनायकल्प्यते निंदार्होभवतीत्यर्थः ॥ १५ ॥ पुनः कर्तव्यमाह समूलेति- एतच्छरीराद्यहंकारांतं समूलंमूलाविद्यासहितं सदानिर्विकल्पे ब्रह्मणिआत्मनि वह्नौ वह्निस्थाने परिदह्य दग्ध्वा दग्धइवतत्स्मृतिमपि त्यक्त्वा तद्वासनां परिधूय ततः

विं॰चू॰ स्वयं विद्वरिष्टः सम्यक्ज्ञातात्मतत्वः नित्यविशुद्धबोधात्मनातिष्ठतिइति ॥१६॥ तत्वदृशीर्वर्तनमाह प्रारब्धेति– तत्ववेत्ताआनंदात्मनि ब्रह्मणि सटी॰
लीनावृत्तिर्यस्यसलीनवृत्तिः प्रारब्धसूत्रग्रथितं शरीरंप्रयातु वा तिष्ठतुतत्पुनर्नपश्यति कः किमिव गौर्महोक्षा द्वंद्वयुद्धेप्रवृत्तः क्रोधारब्धअमर्ष
॥ ७४ ॥ वशाद्विगतदेहस्मृतिः शृंगपातोद्भवंअसृग्रक्तंयथानपश्यति तद्वदित्यर्थःगोरिवस्रगितिपाठे यथापूजितायागोर्धेनोः स्रक्पुष्पमालातत्सूत्रेक्षीणे अ॰

प्रारब्धसूत्रग्रथितं शरीरं प्रयातुवातिष्ठतुगोरिवास्रक् ॥ न तत्पुनःपश्यतितत्ववेत्ता नंदात्मनि ७
ब्रह्मणिलीनवृत्तिः ॥ १७ ॥ अखण्डानंदमात्मानं विज्ञायस्वस्वरूपतः ॥ किमिच्छन्कस्यवाहेतो
र्देहंपुष्णातितत्ववित् ॥ १८ ॥ संसिद्धस्यफलंत्वेतज्जीवन्मुक्तस्य योगिनः ॥ वहिरंतःसदानंद
रसास्वादनमात्मनि ॥ १९ ॥

प्रयातुपततुसंपन्नेतुतत्सूत्रे तिष्ठतुवा तांमालामन्नपानादिना नन्दितागौर्नपश्यति तथातत्ववेत्तापि ब्रह्मणिलीनवृत्तिरिदं शरीरं प्रारब्धक्षयेप्र-
यातु प्रारब्धशेषेस्थितं वा नपश्यतीत्यर्थः ॥१७॥ अत्रबृहदारण्यश्रुतितात्पर्यं प्रमाणयति अखंडेति– तत्ववित् आत्मज्ञः आत्मानं स्वस्वरूपतो ॥ ७५ ॥
अखंडानंदं विज्ञायनिश्चित्यततः किमिच्छन् कस्यवाकामस्यहेतोः देहंपुष्णाति नपुष्णातीत्यर्थः ॥१८॥ आत्मज्ञानमहिमानमाह संसिद्धस्येति–

योगिनश्चात्मयोगिनो जीवन्मुक्तस्य संसिद्धस्य जीवन्मुक्ततांप्राप्तस्य एतदेवफलं किमेतदित्यतआह आत्मनिस्वस्वरूपेएववहिरंतः बाह्यदृष्टौ अंतर्दृष्टौ च सदानंदात्मस्यास्वादनं आनंदरसानुभवइत्यर्थः ॥१९॥ हेतुहेतुमद्भावेन वैराग्यादीनांफलमाह वैराग्येति— वैराग्यस्य फलंतु बोधएव स्वरूपज्ञानं बोधः तथाबोधस्यस्वस्वरूपज्ञानस्यफलंतुउपरतिःउपरमणंविषयेभ्यश्चित्तवृत्तेर्निवारणमात्मप्रवणत्वं चेति तथोपरतेः फलं तु स्वानन्दानुभवाच्छांतिः तस्मिन्नेवात्मानुभवेमग्नता तापहेतूनांरागद्वेषादीनामभावादित्यर्थः ॥ २० ॥ यदिउत्तरोत्तराणां वैराग्यादिकार्याणाम-

वैराग्यस्यफलंबोधो बोधस्योपरतिःफलम् ॥ स्वानन्दानुभवाच्छांति रेषैवोपरतेःफलम् ॥२०॥
यद्युत्तरोत्तराभावः पूर्वंपूर्वं तु निष्फलम् ॥ निवृत्तिःपरमातृप्तिरानन्दोनुपमःस्वतः ॥ २१ ॥
दृष्टदुःखेष्वनुद्वेगो विद्यायाः प्रस्तुतंफलम् ॥ यत्कृतं भ्रांतिवेलायां नानाकर्मजुगुप्सितम् ॥
पश्चान्नरोविवेकेन तत्कथं कर्तुमर्हति ॥ २२ ॥

भावश्चनुत्पत्तिरालस्यादिना भवति तदा पूर्वं पूर्वं वैराग्यादिकं निष्फलं भवति विद्योत्पत्तेरभावादित्यर्थः विद्योतपत्तेः फलमाह निवृत्तिरिति– अहंकारादिविषयेभ्योनिवृत्तिः परमात्मनिनिरवच्छिन्नातृप्तिः स्वतआत्मनएवानुपमआनंदः ॥ २१ ॥ विद्योत्पत्तावसत्कर्मप्रवृत्तिर्नभवतीत्याह दृष्टेति–दृष्टदोषेषु उद्वेगजनकेषु मानापमानहेतुषुसत्सु अपि तन्मिथ्यात्वनिश्चयात् तत्कृतउद्वेगो नभवतीति विद्या-

 

फलंप्रस्तुतं ख्यातमित्यर्थः यत्कर्मजुगुप्सितं नानाविधं भ्रांतिवेलायामविवेकेन कृतंपश्चाद्भ्रांतिनिवृत्तौसत्यां विवेकेन युक्तोनरः तज्जुगुप्सितंकर्मकथमर्हति न कथमपीत्यर्थः ॥ २२ ॥ कस्मान्नकरोति इत्यतआह विद्येति–असतः असत्कर्मणोनिवृत्तिर्विद्यायाः फलं असत्कर्मसु प्रवृत्तिर्हि अज्ञानफलं तदीक्षितंकुत्रेत्यतआह तज्ज्ञाज्ञेति—यस्मात्कारणात् मृगतृष्णिकादौ शुक्तिरजतादौच तज्ज्ञाज्ञयोर्निवृत्तिप्रवृत्त्योर्दृष्टंशुक्तिरजते तज्ज्ञस्यरजताधिष्ठान शुक्तिज्ञानतस्ततोनिवृत्तिः अज्ञस्य च शुक्तिस्वरूपमजानतस्तत्र प्रवृत्तिश्च रजते दृष्टेत्यर्थः । नोचेत् चेत् यदि

विद्याफलंस्यादसतोनिवृत्तिः प्रवृत्तिरज्ञानफलंतदीक्षितम् ॥ तज्ज्ञाज्ञयोर्यन्मृगतृष्णिकादौ नोचेद्विदांदृष्टफलंकिमस्मात् ॥ २३ ॥ अज्ञानहृदयग्रंथेर्विनाशो यद्यशेषतः ॥ अनिच्छोर्विषयःकिन्तु प्रवृत्तेःकारणंस्वतः ॥ २४ ॥ वासनानुदयोभोग्ये वैराग्यस्यतदावधिः ॥ अहंभावोदयाभावो बोधस्य परमावधिः ॥ लीनवृत्तेरनुत्पत्तिर्मर्यादोपरतेस्तु सा ॥ २५ ॥

एवंविवेको न स्यात्तदाविदां विद्यावतां अस्माद्वस्तुज्ञानात् दृष्टफलं किंस्यात् किमपिनेत्यर्थः विदुषोऽज्ञानजनितहृदयग्रंथेरशेषतो विनाशः स्यात्तदा अनिच्छोरिच्छारहितस्यास्य प्रवृत्तेः कारणं स्वतएव विषयः किंनु स्यात्किंतु नभवतीत्यर्थः ॥ २४ ॥ वैराग्यबोधयोरवधिमाह वासनेति– भोग्ये भोगार्हे वस्तुनि वासनायाअनुत्पत्तिश्चेत्स्यात् तथा वैराग्यस्यावधिः पूर्णता इत्यर्थः अहंकारोत्पत्तेरभावो बोधस्य ॥ ७५ ॥

परमावधिः पूर्णतेत्यर्थः लीनाया वृत्तेः पुनरनुत्पत्तिर्या सा उपरतेर्मर्यादेति ॥ २५ ॥ अथ जीवन्मुक्तस्य लक्षणमाह ब्रह्मेति— यः कश्चिद्वि- द्वान् अनंतपुण्यफलभुगेवमास्ते स भुवि धन्योमान्यश्चेति कीदृशः सः सदाब्रह्माकारतया स्थिततया स्थितत्वेन निर्मुक्ता निवृत्ता बाह्या- र्थेभ्योधीर्यस्य स निर्मुक्तबाह्यार्थधीः पुनश्च अन्यैः स्वात्मभिन्नैरावेदिता साधिता भोग्यानां भोगानां भोजनाच्छादनादीनां कलना कल्पना

ब्रह्माकारतयासदास्थिततया निर्मुक्तबाह्यार्थधीरन्यावेदितभोग्यभोगकलनो निद्रालुवद्बा- लवत् ॥ स्वप्नालोकितलोकवज्जगदिदं पश्यन्क्वचिल्लब्धधीरास्तेकश्चिदनन्तपुण्यफलभुग्धन्यः समान्योभुवि ॥ २६ ॥ स्थितप्रज्ञोयतिरयं यःसदानन्दमश्नुते ॥ ब्रह्मण्येवविलीनात्मा निर्विका- रोविनिष्क्रियः ॥ २७ ॥

यस्य स अन्यावेदितभोग्यभोगकलनः पुनश्च क्वचिल्लब्धधीः समाधेरुत्थितो लब्धबाह्यसंज्ञस्सदा स्वप्नदृष्टपदार्थस्मृतिविषय- भूतवस्तुवत् आसक्तिशून्यः निद्रालुवद्विशेषकलनारहितः बालवत् रागद्वेषशून्यः इदंजगत्पश्यन्नास्ते स धन्यइत्यर्थः ॥ २६ ॥ स्थितप्रज्ञस्वरुपमाह स्थितेति— अयं यतिः स्थितप्रज्ञः कोसौ यो ब्रह्मण्येव विलीनः समाहितः आत्मा बुद्धिर्यस्य सः निर्विकारः

विनिष्क्रियः विशेषेण निर्गता दूरीभूताःक्रिया यस्मात्सएतादृशः सन् सदानन्दं स्वात्मानन्दमश्नुते अनुभवतीत्यर्थः ॥ २७ ॥ अथ प्रज्ञा-स्वरूपमाह ब्रह्मेति—तत्वमसीतिवाक्येन भागत्यागलक्षणया शोधितयोर्ब्रह्मात्मनोरेकभावावगाहिनी एकत्वविषयिणी निर्विकल्पा संशय-



॥ ७६ ॥ शून्या चिन्मात्रा चिदेकनिष्ठा या वृत्तिः सा प्रज्ञा इति कथ्यते ॥ २८ ॥ स्थितप्रज्ञलक्षणमाह सुस्थितेति—असौ प्रज्ञा यस्य सुस्थिताभ-

६

ब्रह्मात्मनोःशोधितयोरेकभावावगाहिनी ॥ निर्विकल्पाचचिन्मात्रावृत्तिःप्रज्ञेतिकथ्यते ॥ २८ ॥
सुस्थितासौभवेत्यस्य स्थितप्रज्ञः स उच्यते ॥ यस्यस्थिताभवेत्प्रज्ञा यस्यानंदोनिरंतरः ॥
प्रपंचोविस्मृतप्रायः सजीवन्मुक्तइष्यते ॥ २९ ॥ लीनधीरपिजागर्त्ति यो जाग्रद्धर्म्मवर्जितः ॥
बोधो निर्वासनोयस्य सजीवन्मुक्त इष्यते ॥ ३० ॥

वेत्स पुरुषः स्थितप्रज्ञ उच्यते जीवन्मुक्तलक्षणमाह यस्येति— यस्य पुरुषस्य प्रज्ञा स्थिता भवेत् यस्य आनंदो निरंतरः सदैकरसः यस्या-
यंप्रपंचो विस्मृतप्रायः विशेषतया विस्मृतः सजीवन्मुक्त उच्यते ॥२९॥ पुनरपि लीना ब्रह्माकारा जाता धीर्यस्य सलीनधीरेतादृशोपि जागर्त्ति ॥ ७६ ॥
न च निद्रावशंगतः तथा जाग्रद्धर्मैर्विषयचिंतनरूपैर्वर्जितो रहितः यस्य बोधो निर्वासनः सकलवासनारहितः स जीन्मुक्त उच्यते ॥ ३० ॥

जीवन्मुक्तस्य लक्षणांतरमाह शांतेति— शांता लीना संसारस्य कलना कल्पना यस्य सः कलावानपि चातुर्ययुक्तोपि निष्कलः अप्रकटितचातुर्य इत्यर्थः यस्य विदुषश्चित्तं विनिश्चिंतं विशेषेण निर्गता चिंता यस्मात्तताद्दृगिति चिंतारहितमिति सजीवन्मुक्त उच्यते इति॥३१॥ पुनरप्याह वर्तमानेति—छायावदनुकूलेऽस्मिन्देहेवर्तमानेपि तत्राहंताममताऽभावो जीवन्मुक्तस्यलक्षणमिति ॥ ३२ ॥ अतीतस्य व्यतीत-

शान्तसंसारकलनः कलावानपिनिष्फलः ॥ यस्यचित्तंविनिश्चिन्तं सजीवन्मुक्तइष्यते ॥ ३१ ॥

वर्तमानेपिदेहेस्मिञ्छायावदनुवर्तिनि ॥ अहंताममताभावो जीवन्मुक्तस्यलक्षणम्॥ ३२ ॥

अतीताननुसंधानं भविष्यदविचारणम्॥ औदासीन्यमपिप्राप्तं जीवन्मुक्तस्य लक्षणम् ॥ ३३ ॥

गुणदोषविशिष्टेस्मिन्स्वभावेनविलक्षणे ॥ सर्वत्रसमदर्शित्वं जीवन्मुक्तस्यलक्षणम् ॥ ३४ ॥

इष्टानिष्टार्थसंप्राप्तौ समदर्शितयात्मनि॥ उभयत्राविकारित्वं जीवन्मुक्तस्यलक्षणम् ॥ ३५ ॥

स्यार्थस्याननु संधानमस्मरणं भविष्यतो भाविकार्यस्य कथं भविष्यतीत्यविचारणं संकल्पाभावः प्राप्तेप्यर्थे औदासीन्यं हर्षशोकाभावोजीवन्मुक्तस्य लक्षणम् ॥ ३३ ॥ अस्मिन्जगति गुणदोषविशिष्टे तथा स्वभावतएव विलक्षणे नानाविधे सर्वत्रगुणवतिदोषवतिच समदर्शित्वं हर्षशोकाभावो जीवन्मुक्तस्य लक्षणम् ॥ ३४ ॥ इष्टानिष्टार्थसंप्राप्तौ सुखदुःखदवस्तुसंबंधे सति विदुषः समदर्शितया आत्मनि चित्ते

विं०चू०

॥ ७७ ॥

उभयत्र इष्टेर्थेनिष्टेर्थेच अविकारित्वं हर्षशोकाभावः जीवन्मुक्तस्य लक्षणमिति ॥ ३५ ॥ ब्रह्मेति— ब्रह्मानंदएव रसस्तस्य य आस्वादो ऽनुभवस्तस्मिन्नासक्तचित्ततया यतेर्विदुषः अंतर्हृदि कर्तृत्वादीनां बहिःशब्दादिविषयाणामविज्ञानं ज्ञानाभावोऽप्रतीतिरित्यर्थः एतज्जीवन्मुक्तस्य लक्षणमिति ॥ ३६ ॥ पुनरप्याह देहेति— यः पुरुषो देहेंद्रियादौ तथा कर्तव्ये कर्मणि च ममाहंभाववर्जितः औदासीन्येन राग-

सटी०

अ०

७

ब्रह्मानंदरसास्वादासक्तचित्ततया यतेः ॥ अंतर्बहिरविज्ञानं जीवन्मुक्तस्य लक्षणम् ॥ ३६ ॥
देहेंद्रियादौ कर्तव्ये ममाहंभाववर्जितः ॥ औदासीन्येन यस्तिष्ठेत्स जीवन्मुक्तलक्षणः ॥ ३७ ॥
विज्ञातआत्मनोयस्य ब्रह्मभावः श्रुतेर्बलात् ॥ भवबंधविनिर्मुक्तः सजीवन्मुक्तलक्षणः ॥ ३८ ॥
देहेंद्रियेष्वहंभाव इदंभावस्तदन्यके ॥ यस्य नो भवतः क्वापि स जीवन्मुक्त इष्यते ॥ ३९ ॥

द्वेषराहित्येन यस्तिष्ठेत्सजीवन्मुक्तलक्षणः जीवन्मुक्तलक्षणानि यस्मिन् सजीवन्मुक्तलक्षण इत्यर्थः ॥ ३७ ॥ पुनरप्याह विज्ञातइति— यस्यात्मनो विज्ञाते इदंताविषये सर्वं खल्विदं ब्रह्मतजलानितिश्रुतेर्बलात् आत्मभाव आत्मदृष्टिरस्ति स भवबंधविनिर्मुक्तः जीवन्मुक्तलक्षणः जीवन्मुक्तलक्षणवानित्यर्थः ॥ ३८ ॥ पुनरप्याह यस्य विदुषो देहेंद्रियादिषु अहंभावो नो भवति तदन्यके देहाद्भिन्ने स्त्रीपुत्रादौ इदं ॥ ७७

ममेति इदंभावो नभवति क्वापि कुत्रचिदपि सजीवन्मुक्त इष्यते ॥ ३९ ॥ पुनर्लक्षणांतरमाह नेति– यः पुरुषः प्रत्यग्ब्रह्मणोर्भेदं तथा ब्रह्मसर्गयोर्ब्रह्मजगतोर्भेदं प्रज्ञया अयमात्मा ब्रह्म सर्वंखल्विदं ब्रह्मेति वाक्योत्थया प्रज्ञया ज्ञानेन विजानाति सर्वंब्रह्मेति मन्यते सजीवन्मुक्तलक्षण इति ॥ ४० ॥ पुनरप्याह साधुभिरिति— यस्यविदुषोऽस्मिन् शरीरे साधुभिः सज्जनैः पूज्यमानेपि दुर्जनैः पीड्यमानेपि

नप्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः ॥ प्रज्ञया यो विजानाति सजीवन्मुक्तस्यलक्षणः ॥ ४० ॥
साधुभिः पूज्यमानेस्मिन् पीड्यमानेपिदुर्जनैः ॥ समभावो भवेद्यस्य स जीवन्मुक्तलक्षणः ॥ ४१ ॥
यत्र प्रविष्टाविषयाः परेरिता नदीप्रवाहाइव वारिराशौ ॥ लीयंति सन्मात्रतयानविक्रियामुत्पादयन्त्येष यतिर्विमुक्तः ॥ ४२ ॥

उभयोः पूजायां पीडायां च यस्य समभावः हर्षामर्षराहित्यं सजीवन्मुक्तलक्षणः तल्लक्षणवानित्यर्थः ॥ ४१ ॥ पुनराह यत्रेति— यत्र यस्मिन् विदुषि परेरिता स्वप्रयत्नंविनैव परसंपादिताविषयाः भोजनाच्छादनादयः प्रविष्टा येन भुक्तास्ते वारिराशौ समुद्रे नदीप्रवाहाइव सन्मा-

त्रतया ब्रह्मरूपतयालीयंति नहर्षमुत्पादयंति एषयतिर्विमुक्त इति ॥ ४२ ॥ विमुक्तस्य परीक्षामाह विज्ञातेति— विज्ञातब्रह्मतत्वस्य आत्मज्ञस्य यथापूर्वं अज्ञानावस्थायां यथासंसृतिः पदार्थासक्तिः तथा विज्ञानावस्थायां न भवति चेद्यदिपदार्थासक्तिरस्ति तदायंनविज्ञात ब्रह्मभावः किंतु बहिर्मुख एवेति ॥ ४३ ॥ आसक्तिमाशंक्य दूषयति प्राचीनेति– ननु प्रारब्धकर्मवासनावेगादासक्तिः पदार्थेषु अस्ति चेदस्तु विदुषः का हानिरित्याशंक्याह नेति– यत्वयोक्तं तन्न सदेकरसात्मतत्वविज्ञानात् वासना मन्दीभवति शिथिलीभवति आसक्त्युत्पा-



विज्ञातब्रह्मतत्वस्य यथापूर्वं न संसृतिः ॥ अस्तिचेन्न सविज्ञातब्रह्मभावो बहिर्मुखः ॥ ४३ ॥

प्राचीनवासनावेगादसौ संसरतीतिचेत् ॥ न सदेकत्वविज्ञानान्मंदीभवति वासना ॥ ४५ ॥

अत्यंतकामुकस्यापि वृत्तिः कुण्ठतिमातरि ॥ तथैवब्रह्मणिज्ञाते पूर्णानंदेमनीषिणः ॥ ४५ ॥

दनसमर्था न भवतीत्यर्थः ॥ ४४ ॥ वस्तुविशेषं प्राप्य बुद्धेर्वृत्तेरन्यथाभावो निवर्तते इति स दृष्टान्तमाह अत्यंतेति– अत्यंतकामुकस्यापि पुरुषस्य वृत्तिर्बुद्धिवृत्तिर्मातरि मातृविषये कुण्ठति कुटिप्रतिघाते कुंठिताभवति त्यक्तकामवासनाभवतीत्यर्थः यथात्र मातृदर्शने एवं शक्तिविशेषः तथैव पूर्णानन्दे ब्रह्मणि ज्ञाते मनीषिणः सर्वत्रासक्तिर्निवर्त्तते इति ब्रह्मज्ञानप्रभावएवायं यत्तज्ज्ञानात्सर्ववासनाक्षयो भव-

तीति ॥ ४५ ॥ प्रारब्धक्षये मोक्ष इत्याह निदिध्यासेति— निदिध्यासनशीलस्य बाह्यप्रत्यय ईक्ष्यते दृश्यते यतोऽतस्तस्य बाह्यप्रत्ययनिवृत्यभावे प्रारब्धमेव कारणं कल्पते फलदर्शनात् विदुषोपि भोगदर्शनात् श्रुतिरप्याह तस्य तावदेव चिरमिति ॥ ४६ ॥ प्रारब्धभोगप्रतीतौ मर्यादामाह सुखेति— यावत्सुखाद्यनुभवस्तावत् प्रारब्धमेवेष्यते अनुमीयते फलोदयः फलस्य सुखदुःखादिरू-

निदिध्यासनशीलस्य बाह्यप्रत्यय ईक्ष्यते॥ ब्रवीतिश्रुतिरेतस्य प्रारब्धंफलदर्शनात् ॥ ४६ ॥
सुखाद्यनुभवोयावत्तावत्प्रारब्धमिष्यते॥फलोदयः क्रियापूर्वो निष्क्रियोनहिकुत्रचित् ॥ ४७ ॥
अहंब्रह्मेतिविज्ञानात्कल्पकोटिशतार्जितम्॥ संचितंविलयंयाति प्रबोधात्स्वप्नकर्मवत्॥४८॥
यत्कृतंस्वप्नवेलायां पुण्यंवापापमुल्बणम्॥ सुप्तोत्थितस्यकिंतत्स्यात्स्वर्गाय नरकायवा ॥४९॥

पस्योदयः क्रियापूर्वःप्रारब्धकर्मपूर्वकएव भवति निष्क्रियः क्रियांविना फलोदयः कुत्रचिदपि न दृष्टइति ॥ ४७ ॥ विदुष एतच्छरीरारंभककर्मक्षयांतएव विक्षेपो नतु देहपातेपीत्याह अहमिति— ब्रह्माहमस्मीति विज्ञानात्कल्पकोटिशतार्जितं संचितं कर्मविलयं नाशं याति कथं यथाप्रबुद्धस्य पुरुषस्य स्वप्नकृतकर्मसंबंधो नभवति तद्वदित्यर्थः ॥ ४८ ॥ अत्र दृष्टांतमाह यत्कृतमिति— स्वप्नवेलायां स्वप्नसमये

पुण्यं वा उत्वणं घोरं पापं वा यत्कृतं तत्पुण्यं पापं वा स्वप्नोत्थितस्य स्वर्गप्रदो नरकप्रदोवा किंभवति किंतु नैव भवति संकल्पमात्रत्वेन
॥ ७९ ॥ मिथ्यात्वादिति ॥ ४९ ॥ क्रियमाणकर्मसंबंधोऽप्यस्य नभवतीत्याह स्वमिति— स्वमात्मानमसंगं संगरहितं उदासीनं सर्वत्रासक्तिरहितं
च परिज्ञाय ज्ञात्वा नभो यथा आकाशवत् परिपूर्णं संगरहितं ज्ञात्वा भाविकर्मभिः कदाचिदपि यत्किंचिदपि नश्लिष्यतीति नसंबध्यत अ० ७
इत्यर्थः ॥ ५० ॥ अत्र दृष्टांतमाह नभइति— यथा नभ आकाशं घटयोगेन सुराघटयोगेन सुरायुक्तघटसंबंधेन सुरागंधेन नलिप्यते तथा

स्वमसङ्गमुदासीनं परिज्ञायनभोयथा ॥ नश्लिष्यति च यत्किंचि त्कदाचिद्भाविकर्मभिः ॥ ५० ॥
न नभो घटयोगेन सुरागंधेन लिप्यते ॥ तथात्मोपाधियोगेन तद्धर्मैर्नैव लिप्यते ॥ ५१ ॥
ज्ञानोदयात्पुरारब्धं कर्म ज्ञानान्न नश्यति ॥ अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥ ५२ ॥

आत्मापि अहंकाराद्युपाधियोगेन तद्धर्मैरुपाधिधर्मैः कर्तृत्वादिभिर्न लिप्यते न युज्यत इत्यर्थः ॥ ५१ ॥ संचितक्रियमाणकर्मणां विदुषः सं-
वंधाभावमुक्त्वा प्रारब्धकर्मणो भोगेन नाश इतिसदृष्टांतमाह ज्ञानोदयादिति— यत्कर्मज्ञानोदयात्पुरा पूर्वं शरीरोत्पादकत्वेनारब्धं ईश्व- ॥ ७९ ॥
रेण फलप्रदानायाज्ञप्तं तत्कर्मतु ज्ञानादपि न नश्यति ईश्वराज्ञाया अन्यथाकर्तुमीश्वरेणाप्यशक्यत्वात् मिथ्याप्रतिज्ञत्वापत्तेः स्वफलमद-

त्वा न नश्यतीत्यर्थः यथा लक्ष्यमुद्दिश्य उत्सृष्टो बाणो लक्ष्यभेदनं विना न निवर्तते तद्वदिति ॥ ५२ ॥ तन्निवारणे यत्नो न संभवतीत्याह व्याघ्रेति— यथा व्याघ्रबुद्ध्या गविनिर्मुक्तोबाणः बाणविसर्गानंतरं गोमतौ गौरियं न व्याघ्रइति बुद्धौ सत्यामपि बाणो निर्भरमत्यंतं वेगेन लक्ष्यं छिनत्त्येव न मध्ये तिष्ठतीति दार्ष्टान्तमाह प्रारब्धमिति—प्रारब्धं कर्म खलु विदां ज्ञानिनामपि बलवत्तरं तस्य भोगेनैव क्षयो

व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ॥ न तिष्ठति छिनत्त्येव लक्ष्यं वेगेन निर्भरम् ॥५३॥
प्रारब्धं बलवत्तरं खलुविदां भोगेनतस्यक्षयः सम्यग्ज्ञानहुताशनेनविलयः प्राक्संचितागामि-
नाम् ॥ ब्रह्मात्मैक्यमवेक्ष्यतन्मयतया येसर्वदासंस्थितास्तेषांतत्त्रितयंनहिक्वचिदपि ब्रह्मै-
वतेनिर्गुणम् ॥ ५४ ॥

भवति प्राक्संचितानां तथागामिनां तु ज्ञानहुताशनेन ज्ञानाग्निना सम्यङ्निःशेषतया विलयः क्षयो भवति तर्हि ज्ञानिनोपि नसुखमित्या- शंक्य तस्यानन्दैकरसात्मनिष्ठत्वेन प्रारब्धभोगाप्रतीतेर्निरंतरं सुखमेवेत्याह ब्रह्मेति— ब्रह्मात्मैक्यमवेक्ष्य दृष्ट्वा तन्मयतया ब्रह्मरूपतया ये सर्वदा संस्थितास्तेषां तत्त्रितयं संचितक्रियमाणप्रारब्धं क्वचिदपि न भाति तेतु निर्गुणं ब्रह्मैव संपन्नाइति ॥ ५४ ॥

॥ ८० ॥ विदुषः प्रारब्धकर्मभोगो नप्रतिभातीत्याह उपाधीति— उपाधितादात्म्यविहीनं यत्केवलं ब्रह्म तदात्मना तत्तादात्म्येन आत्मनि हृदि तिष्ठतो मुनेः मननशीलस्य विदुषः प्रारब्धमस्तीति कथाकथनमपि न युक्ता नसंभवति यथा जाग्रतः पुरुषस्य स्वप्नदृष्टव्याघ्रादिनिवारणोद्योग-कथा न संभवति तथेत्यर्थः ॥ ४५५ ॥ एतदेवस्पष्टयति नहीति— प्रबुद्धः स्वप्नादुत्थितः पुरुषः प्रतिभासदेहे स्वप्नदृष्टदेहे तथा स्वप्नदृष्टे अ० ७

उपाधितादात्म्यविहीनकेवलब्रह्मात्मनैवात्मनि तिष्ठतो मुनेः ॥ प्रारब्धसद्भावकथानयुक्ता स्वप्नार्थसंबंधकथेवजाग्रतः ॥ ५५ ॥ नहिप्रबुद्धःप्रतिभासदेहे देहोपयोगिन्यपिचप्रपंचे ॥ करो-त्यहंतां ममतामिदंतां किंतुस्वयंतिष्ठति जागरेण ॥ ५६ ॥ नतस्यमिथ्यार्थसमर्थनेच्छा नसंग्र-हस्तज्जगतोपिदृष्टः ॥ तत्रानुवृत्तिर्यदिचेन्मृषार्थे ननिद्रयामुक्तइतीष्यतेध्रुवम् ॥ ५७ ॥

देहोपयोगिनि देहोपकारके पुत्रमित्रादिप्रपंचे अहंतां देहे ममतां पुत्रे इदंतां मित्रादौ नहिकरोति किन्तु स्वयं जागरेण जाग्रदवस्थायुक्त-स्तिष्ठति ॥ ४५६ ॥ विशेषार्थमाह नतस्येति— तस्य स्वप्नोत्थितस्य पुरुषस्य मिथ्यार्थस्य स्वप्नदृष्टस्य समर्थनेच्छारक्षणेच्छा संग्रहेच्छासं-पादनेच्छा वा नदृष्टा यदिचेन्मृषार्थे स मर्थनेच्छादिकं स्यात्तदा सनिद्रया न मुक्तः किंतु निद्रितः निद्रागृहीतएवेतिध्रुवमिष्यते ॥ ४५७ ॥ ॥ ८० ॥

दृष्टान्तमुक्त्वादार्ष्टान्तिकमाह तद्वदिति— तद्वत्स्वप्नोत्थितवत् परेब्रह्मणि वर्तमानः सदात्मना ब्रह्मात्मनातिष्ठति अन्यत् प्रारब्धं सुखदुःखादिकं च नेक्षते नपश्यति। यदातस्य भोजनमलमोचनादिस्मृतिर्भवति तदा यथा स्वप्नदृष्टार्थस्य स्मृतिर्भवति तथाभवति नतुतत्र तद्विशेषकल्पना भवतीत्यर्थः ॥ ५८ ॥ विशेषकल्पना कुतोनभवतीत्याशंक्याह कर्मणेति—तस्य देह एव कर्मणानिर्मितः तस्यैव देहस्य प्रार-

तद्वत्परेब्रह्मणिवर्तमानः सदात्मना तिष्ठति नान्यदीक्षते ॥ स्मृतिर्यथास्वप्नविलोकितार्थे तथाविदः प्राशनमोचनादौ ॥ ५८ ॥ कर्मणानिर्मितोदेहः प्रारब्धं तस्यकल्प्यताम् ॥ नानादेरात्मनोयुक्तं नैवात्मा कर्मनिर्मितः ॥ ५९ ॥ अजोनित्यःशाश्वतइति ब्रूतेश्रुतिरमोघवाक्॥ तदात्मना तिष्ठतोस्य कुतः प्रारब्धकल्पना ॥ ६० ॥

ब्धं कल्प्यताम् अनादेरात्मनस्तु प्रारब्धं न युक्तं यतोयमात्मा कर्मनिर्मितोनास्ति अजरामरत्वादिति ॥ ५९ ॥ आत्मनोऽजरामरत्वेश्रुतिं प्रमाणयति अजोनित्यः शाश्वतोयं पुराणइति सत्यभाषणी श्रुतिरात्मानमजं ब्रूते तदात्मना ब्रह्मात्मना तिष्ठतः अस्यविदुषः प्रारब्धकल्प-

विं०चू०



नाकुतः नकुतोपीत्यर्थः ॥ ६० ॥ देहाध्यासनिवृत्तौ प्रारब्धभानमपि निवर्ततइत्याह प्रारब्धमिति— यदादेहात्मना देहाध्याससहिता शरीरेस्थितिर्भवति तदाप्रारब्धं सिद्ध्यति विदुषस्तु देहे आत्मभावोहंबुद्धिर्नेष्टा नाभिमता अतःप्रारब्धं प्रारब्धमस्तीति बुद्धिस्त्यज्यतामिति ॥६१॥

 तर्हिंशरीरस्य प्रारब्धजनितत्वात् तत्प्रारब्धं शरीरस्यैवास्तु इति नाशंकनीयम् आत्माभिमानरहितस्य शरीरस्य जडत्वात्तद्भोगानुपपत्ति- 

प्रारब्धंसिद्ध्यतितदा यदादेहात्मनास्थितिः ॥ देहात्मभावोनैवेष्टः प्रारब्धं त्यज्यतामतः ॥६१॥ 

शरीरस्यापिप्रारब्धकल्पनाभ्रांतिरेवहि ॥ अध्यस्तस्य कुतः सत्वमसत्यस्यकुतो जनिः ॥६२॥

अजातस्य कुतोनाशः प्रारब्धमसतःकुतः ॥ ज्ञानेनाज्ञानकार्यस्य समूलस्य लयोयदि ॥ ६३ ॥

तिष्ठत्ययं कथं देह इति शंकावतो जडान् ॥ समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः ॥

नतु देहादिसत्यत्वबोधनाय विपश्चिताम् ॥ ६४ ॥

रित्याह शरीरस्येति— शरीरस्यापि प्रारब्धकल्पनाहि यस्माद्भ्रांतिरेव अध्यस्तस्य शरीरस्य सद्भावःकुतः नकुतोपीत्यर्थः असत्यस्यजनिः प्रारब्धजन्यत्वमेवकुतः न कुतोपीति प्रारब्धकर्मफलं सुखदुःखादिकं तस्य न भवतीत्यर्थः ॥ ६२ ॥ अजातस्यदेहस्यनाशः कुतः न कुतोपि 
अतोऽसतस्तस्य देहस्य प्रारब्धं कुतोभवेन्न कुतोपीत्यर्थः ॥ ६३ ॥ एवं विद्वद्दृष्ट्या देहप्रारब्धाद्यभावेपि लोकदृष्ट्या तत्सत्वमाह ज्ञानेनेति—

पूर्वपक्षी पृच्छति ज्ञानेन अज्ञानकार्यस्य देहादेः समूलस्य अज्ञानसहितस्य यदि लयो विनाशः स्यात् तदायं देहः कथं तिष्ठति इति शंकावतो जडान् समाधातुं संशयरहितचित्तान् कर्तुं बाह्यदृष्ट्या लोकदृष्ट्या श्रुतिः प्रारब्धं वदति तस्य तावदेव चिरमिति नतु विपश्चितां विदुषां देहादिसत्यत्वबोधनाय श्रुतिः प्रारब्धं वदति ॥ ६४ ॥ तर्हि विदुषां बोधनाय श्रुतिः कथं वदतीति पृष्ट आह सप्तभिः परिपूर्णमिति— एकमेवाद्वितीयं ब्रह्मेति श्रुतौ ब्रह्म एकमद्वयमेवेति पर्यायशब्दैः सजातीयं विजातीयं स्वगतं च भेदत्रयं निषिध्यते सजातीयस्तु यथावृक्षांतराद्वृक्षस्यभेदः विजातीयो यथा पाषाणादिभ्यो वृक्षस्य भेदः स्वगतस्तु भेदो यथा वृक्षस्य पत्रपुष्पफलादिभिरिति एवमात्मनः सर्वथा

**परिपूर्णमनाद्यंतमप्रमेयमविक्रियम् ॥ एकमेवाद्वयं ब्रह्म नेहनानास्ति किंचन ॥ ६५ ॥**

भेदनिषेधे तथामनसैवेदमाप्तव्यम् नेहनानास्तिकिंचनेति श्रुत्या च इदं ब्रह्म आचार्यागमसंस्कृतेन मनसा एकरसमाप्तव्यं आत्मैवास्ति नान्यदस्तीति इह अस्मिन् नात्मनि आप्ते ज्ञाते नानाप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वात् इह ब्रह्मणि नानाकिंचन अणुमात्रमपि नास्ति ज्ञातायां रज्जौ सर्पइव इति कठश्रुत्याच भेदनिषेधे देहप्रारब्धादिभ्रमनिवृत्तौ परिपूर्णादिरूपब्रह्मस्वरूपेणैवावस्थीयते विदुषा तस्य देहसंबंधगंधोपि नास्ति कुतः प्रारब्धसंबंध इतिभावः परिपूर्णं श्रुत्युक्तत्रिविधपरिच्छेदशून्यं अनाद्यंतं कालकृतपरिच्छेदशून्यं

T

अप्रमेयमिति ज्ञानकृतपरिच्छेदशून्यं अविक्रियं परिणामरहितमित्यर्थः ॥ ६५ ॥ ईदृशान्येवविशेषणांतराण्याह सद्घनमिति- सद्घनं सर्वतः सद्रूपं चिद्घनं सर्वतश्चिद्रूपं नित्यं सनातनं आनंदघनं परितआनंदरूपं अक्रियं क्रियारहितं एकमेवाद्वयमित्यादिश्रुतिव्याख्यानं पूर्ववत् ॥ ६६ ॥ पुनश्च प्रत्यक्सर्वव्यापि एकरसं एकाकारं पूर्णं व्यापकं अनन्तमन्तरहितं सर्वतोमुखं सर्वद्रष्टृ एकमेवेति ॥ ६७ ॥ अहेयं



सद्घनं चिद्घनं नित्यमानन्दघनमक्रियम् ॥ एकमेवाद्वयं ब्रह्म नेहनानास्ति किंचन ॥ ६६ ॥
प्रत्यगेकरसं पूर्णमनन्तं सर्वतोमुखम् ॥ एकमेवाद्वयं ब्रह्म नेहनानास्ति किंचन ॥ ६७ ॥
अहेयमनुपादेयमनादेयमनाश्रयम् ॥ एकमेवाद्वयं ब्रह्म नेहनानास्ति किंचन ॥ ६८ ॥
निर्गुणं निष्कलं सूक्ष्मं निर्विकल्पं निरंजनम् ॥ एकमेवाद्वयं ब्रह्म नेहनानास्ति किंचन ॥ ६९ ॥
अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम् ॥ एकमेवाद्वयं ब्रह्म नेहनानास्ति किंचन ॥ ७० ॥

अनुपादेयं अनादेयं आत्मस्वरूपत्वाद्धेयोपादेयभावरहितं अनाश्रयं सर्वाश्रयत्वादाश्रयापेक्षारहितं एकमेवेति पूर्ववत् ॥ ६८ ॥ निर्गुणं गुणरहितं निष्कलं वृद्धिह्रासशून्यं सूक्ष्मं बालाग्रलक्षभागप्रवेशक्षमं निर्विकल्पं विकल्पः संशयस्तद्रहितं निरंजनं अविद्यासंबंधरहितं एकमित्यादिपूर्ववत् ॥ ६९ ॥ पुनश्च यत् अनिरूप्यस्वरूपं यत मनोवाचामगोचरं सर्वेन्द्रियाविषयं एकमित्यादिपूर्ववत् ॥ ७० ॥

सत् सद्रूपं समृद्धं सकलैश्वर्ययुतं सर्वरूपत्वात् स्वतःसिद्धं शुद्धं निर्मलं बुद्धं सर्वदाज्ञातज्ञेयं साक्षिरूपत्वात् अनीदृशं उपमानरहितं एकमित्यादिपूर्ववत् ॥७१॥ इत्थं वैराग्यबोधवन्तआत्मयोगाद्बहवः परमानंदं प्राप्ताइत्याह निरस्तरागाइति—निरस्तास्त्यक्ता रागायैस्ते निरस्तरागा वैराग्यवन्तः अतएव निरस्तभोगास्त्यक्तभोगाः शान्ता वशीकृतमनसः सुदान्ता विशेषतोवशीकृतेंद्रियाः यतयः कृतसंन्यासाः महान्त उदार-

सत्समृद्धं स्वतःसिद्धं शुद्धं बुद्धमनीदृशम् ॥ एकमेवाद्वयं ब्रह्म नेहनानास्ति किंचन ॥ ७१ ॥
निरस्तरागाविनिरस्तभोगा शान्ताः सुदांता यतयो महांतः ॥ विज्ञाय तत्त्वं परमेतदंते प्राप्ताः
परां निर्वृतिमात्मयोगात् ॥ ७२ ॥ भवानपीदं परतत्वमात्मनः स्वरूपमानन्दघनं विचार्य ॥
विधूय मोहं स्वमनःप्रकल्पितं मुक्तः कृतार्थो भवतु प्रबुद्धः ॥ ७३ ॥

चित्ताः संतः परंतत्वं विज्ञाय बोधं संपाद्येत्यर्थः एतदंते बोधवैराग्यसंपत्यनंतरमात्मयोगात् निर्विकल्पकसमाधिं कृत्वा परांनिर्वृतिं परमानंदरूपे स्वरूपे प्राप्ताजीवन्मुक्ता बभूवुरित्यर्थः ॥ ७२॥ त्वमप्येवमात्मनिष्ठोभवेत्याह भवानपीति- भवान् अपि त्वमपि आनन्दघनं आत्मनः स्वरूपं परं तत्वं विचार्य निस्संशयतया विज्ञाय स्वमनः प्रकल्पितं मोहमज्ञानं विधूय दूरीकृत्य प्रबुद्धः ज्ञातात्मयाथात्म्यः

मुक्तः जीवन्मुक्तः सन्कृतार्थोभवतु भूयादित्यर्थः ॥ ७३ ॥ किमहंकुर्यामित्युक्तो गुरुराह समाधिनेति— समाधिना निर्विकल्पकसमाधिना साधु सम्यक्तया विनिश्चलो य आत्मा बुद्धिस्तेनात्मना निश्चलबुद्धया स्फुटबोधचक्षुषा स्फुटं बोधचक्षुः प्रकटितं बोधचक्षुः ज्ञानदृष्टिर्यस्यैतादृशेनात्मना बुद्धया आत्मतत्त्वं पश्य साक्षात्कुर्वित्यर्थः तत्फलमाह गुरुतः श्रुतः पदार्थः निःसंशयं संशयराहित्येन सम्यगवेक्षितो निदिध्यासनसमाधिभ्यामनुभूतश्चेत्पुनर्नविकल्पते संदिग्धो न भवतीत्यर्थः ॥ ७४ ॥ अविद्यानिवृत्तावात्मानन्दलाभे प्रमाणमाह स्वस्येति—

**समाधिना साधुविनिश्चलात्मना पश्यात्मतत्वं स्फुटबोधचक्षुषा ॥ निःसंशयं सम्यगवेक्षितश्चेच्छ्रुतः पदार्थो न पुनर्विकल्पते ॥ ७४ ॥ स्वस्याविद्याबंधसंबंधमोक्षात्सत्यज्ञानानन्दरूपात्मलब्धौ ॥ शास्त्रं युक्तिर्देशिकोक्तिः प्रमाणं चांतःसिद्धास्वानुभूतिः प्रमाणम् ॥ ७५ ॥**

स्वस्य मुमुक्षोरविद्याकृतबंधस्य संबंधमोक्षात् संबंधनिवृत्तेः सत्यज्ञानानंदरूपात्मलब्धावेतद्वक्ष्यमाणं प्रमाणं एतत्किम् शास्त्रं ब्रह्मविद्ब्रह्मैवभवति भिद्यतेहृदयग्रन्थिः, तरतिशोकमात्मवित्, आनन्दंब्रह्मणो विद्वान् न विभेति कुतश्चनेत्यादि युक्तिश्च आत्मापरानन्दरूपः परप्रेमास्पदत्वात् व्यतिरेके घटवत् देशिकोक्तिः गुरुवाक्यं तथांतःसिद्धा यद्वांतः करणे विद्वत्समाधिसिद्धानुभूतिः सुषुप्त्यादौ स्वात्मानंदानु-

यदा चित्तं त्यक्तविषयवासनं शांतं भवश्च प्रमाणमेति ॥ ७५ ॥ आत्मानंदस्य स्वानुभवप्रसिद्धत्वे स्वानुभवप्रसिद्धिं दर्शयति बंधइति—
निस्संकल्पं निजानंदे समाहितं भवति तदामोक्षः स्वेनैववेद्यः यदा चैकान्ते स्थित्वापि संकल्पादिकं न त्यजति चित्तं च न समाहितं भवति मोहं वानुगच्छति तदा बंधोपिस्वेनैववेद्यः एवं तृप्तिः भोजनानभिलाषःमनसि चिंता च तथा आरोग्यं निरोगता तथाक्षुधा एते स्वेनैव सम्यक्वेद्या यत एषां ज्ञानं अन्येषामानुमानिकं भवति लक्षणैरेवज्ञायते स्वस्य तु अनुभवसिद्धमिति ॥७६॥ अन्यदप्याह तटस्थिताइति—

बंधो मोक्षश्च तृप्तिश्च चिंतारोग्यक्षुधादयः ॥ स्वेनैव वेद्या यज्ज्ञानं परेषामनुमानिकम् ॥७६॥
तटस्थिता बोधयंति गुरवः श्रुतयो यथा ॥ प्रज्ञयैव तरेद्विद्वानीश्वरानुगृहीतया ॥७७॥ स्वानुभूत्यास्वयंज्ञात्वा स्वमात्मानमखण्डितम् ॥ संसिद्धःसन्मुखंतिष्ठेन्निर्विकल्पात्मनात्मनि ॥७८॥

यथा श्रुतयस्तटस्थाः शास्त्रलिखिताएवाधिकारिणं बोधयंति तथा गुरवोपि समीपस्थाएव बोधयंति नतु हस्तादिना किंचिदुपकारं कुर्वंति तथापि ईश्वरानुगृहीतया प्रज्ञयैव आत्मविषयिण्या बुद्ध्यैव गुरुशास्त्रोपदेशेन विद्वान् आत्मज्ञः सन् संसारं तरेत् नात्मप्रयत्नं विना बोधः सिद्ध्यतीत्यर्थः ॥ ७७ ॥ यत आत्मप्रयत्नएव मुख्यः अतः स्वानुभूत्या गुरूपदेशजस्वानुभावेनाखण्डितं परिपूर्णघनं स्वमात्मानं स्वयमेव ज्ञात्वा संसिद्धः प्राप्तात्मानुभवः सन्मुखं यथा स्यात् आत्मनि विषये निर्विकल्पात्मना निर्विकल्पस्वरूपेण तिष्ठेत् समा-

 धिनिष्ठो भूयादित्यर्थः ॥ ७८ ॥ इदानीं गुरुः सकलवेदान्तसिद्धांतमेकश्लोकेनाह वेदान्तेति—वेदान्तसिद्धान्तानां निरुक्तिः संक्षेपेणोपदेशः। 
एषा एषैव जीवो ब्रह्मैव जगच्च ब्रह्मैव नततः पृथक् अतोऽद्वितीये ब्रह्मणि अखण्डरूपेण स्थितिः चेतसः समाधिरेव मोक्षः अस्मिन्नर्थे
 श्रुतयः प्रमाणमिति ॥ ७९ ॥ ततः समाहितोऽभूदित्याह इतीति- इति एवमुक्तात् श्रुतिप्रमाणयुक्ताद्गुरुवचनात् परं सतत्वं आत्मयुक्त्या 
अवगम्य स्वस्वरूपं ज्ञात्वा शिष्यः प्रशमितकरणः उपरतचित्तेंद्रियः निर्विकल्पकसमाधियुक्तः क्वचिदेकांतदेशे अचलमूर्तिरात्मनिष्ठितोभू- 

वेदान्तसिद्धांतनिरुक्तिरेषा ब्रह्मैवजीवः सकलं जगच्च ॥ अखण्डरूपस्थितिरेवमोक्षो ब्रह्माद्वि-
तीये श्रुतयः प्रमाणम् ॥ ७९ ॥ इति गुरुवचनाच्छ्रुतिप्रमाणात्परमवगम्य सतत्त्वमात्मयुक्त्या ॥
प्रशमितकरणः समाहितात्मा क्वचिदचलाकृतिरात्मनिष्ठितोभूत् ॥ ८० ॥

त्समाधिं चकारेत्यर्थः ॥ ८० ॥ ब्रह्माकारतया स्थितः प्रतिलवं निर्मुक्तबाह्यार्थधीः स्वप्नालोकितदृश्यवज्जगदिदं पश्यन् यदा व्युत्थितः ॥
स्वात्मानंदरसं पिबाऽनिशमहोजीवन् विमुक्तो भवेत्युक्तं सद्गुरुणा विवेककमणावध्यायके सप्तमे ॥ ७ ॥ इति श्रीजगाधरीनगरस्थसार- 
स्वतवंशावतंस श्रीमन्मिश्रहरिधन पुरोहितात्मजवेदान्तनिष्ठपण्डितहरिनामदत्तविरचितायां विवेकचूडामणिटीकायां सुबोधिन्यां रुढ़-

सत्वचमत्काररूपजीवन्मुक्तयपरपर्यायासंसक्तिनामपञ्चमभूमिकानिरूपणोनाम सप्तमोध्यायः ॥ ७ ॥ ततः समाध्यनंतरं किमकरोदित्यत-स्राह कंचिदिति– सशिष्यः कंचित्कालं परे ब्रह्मणि मानसं समाधाय निर्विकल्पकसमाधिं कृत्वा ततः समाधेरुत्थाय गुरुसमीपं गत्वा परमानन्दाद्गुरुं प्रति इदं वचनमब्रवीत् ॥ ८१ ॥ हेगुरो ब्रह्मात्मनोरेकतयाधिगत्या समाधावैकात्म्यज्ञानेनमेबुद्धिर्विनष्टा अध्यवसायादिध-

कंचित्कालं समाधाय परेब्रह्मणिमानसम् ॥ उत्थाय परमानंदादिदं वचनमब्रवीत् ॥ ८१ ॥
बुद्धिर्विनष्टागलिताप्रवृत्तिर्ब्रह्मात्मनोरेकतयाधिगत्या ॥ इदंनजानेप्यनिदंनजाने किंवाकिय-
द्वासुखमस्त्यपारम् ॥ ८२ ॥ वाचावक्तुमशक्यमेवमनसा मंतुं न वाशक्यते स्वानन्दामृतपूरपू-
रितपरब्रह्माम्बुधेर्वैभवम् ॥ अंभोराशिविशीर्णवार्षिकशिला भावंभजन्मेमनो यस्यांशांश-
लवेविलीनमधुनानन्दात्मनानिर्वृतम् ॥ ८३ ॥

र्मोन्तःकारणस्य विनष्टः तद्विषयाभावात् तत्प्रवृत्तिः अंतर्बाह्यविषयप्रवृत्तिर्गलिता नष्टा अत्रात्मनिष्ठायामपारं यत्सुखमस्ति तत्किंवा किमात्मकं कियद्वा प्रमाणतइति नजाने तथा इदंयदपरोक्षं वस्तु तन्न जाने यच्चानिदं परोक्षं वस्तुतदपि न जाने द्वितीयस्फूर्त्यभावादि-त्यर्थः ॥ ८२ ॥ आत्मसुखस्याकथनीयतामाह वाचेति—इदं स्वानंदामृतपूरपूरितपरब्रह्मांबुधेर्वैभवं वाचावक्तुमशक्यमेव तथा मनसापि

 मंतुं ज्ञातुं नशक्यते कथं त्वया ज्ञातमित्यतआह अंभइति मेमनः अंभोराशिर्नदीजलप्रवाहः समुद्रोवा तस्मिन् विशीर्णा मग्ना या वार्षि- 
कांशिलावर्षर्त्तुभवा शिला तद्भावो मग्नता तं शिलाभावं सर्वतोमग्नत्वं भुंजन् निखिलत्वं निर्विकारत्वं प्राप्नुवन् यस्यपरब्रह्मांबुधेरंशां-
॥८५॥ शलवे विलीनंसदधुनाइदानीमानंदात्मना आनंदरूपेण निर्वृतंतत्प्रवर्तते ॥ ८३ ॥ जगत्प्रतीतिरपिमेनास्तीत्याह केति— इदं जगत् क्वगतं 
केनवाकुत्रनीतं कुत्रवालीनं अधुनासमाधितः पूर्वंमयादृष्टं इदानींसमाध्युत्तरकालेनास्ती तिकिंमहदद्भुतं महदाश्चर्यं किमितिनजाने अहो 

क्वगतं केन वा नीतं कुत्रलीनमिदंजगत् ॥ अधुनैवमयादृष्टं नास्तिकिंमहदद्भुतम् ॥ ८४ ॥
किं हेयं किमुपादेयं किमन्यत्किंविलक्षणम् ॥ अखंडानंदपीयूषपूर्णे ब्रह्ममहार्णवे ॥ ८५ ॥
न किंचिदत्र पश्यामि न शृणोमि नवेद्म्यहम् ॥ स्वात्मनैवसदानन्द रूपेणास्मिविलक्षणः ॥८६॥

बोधवैभवमित्यर्थः ॥ ८४ ॥ अन्यदाह किमिति- खंडानन्दपीयूषेणामृतेनपूर्णे ब्रह्ममहार्णवे ब्रह्मसमुद्रेस्मिन् हेयमुपादेयं इष्टानिष्टंवस्तु-
जातं किं कुत्रगतमिति तथा अन्यत् भिन्नं आत्मविलक्षणं वा किं न किमपि ऐकात्म्यप्रतीतेरित्यर्थः ॥ ८५ ॥ पुनराह नकिंचिदिति— ॥८५॥
विलक्षणः विगतसर्वलिंगः सकलभेदशून्यः सदानंदरूपेण स्वात्मनैवाहमस्मि द्रष्टव्यश्रोतव्यादेरभावात् अत्रात्मन्येकरूपे किंपश्यामि किंशृ-

णोमि किमहं वेद्मीति न किमपीत्यर्थः ॥ ८६ ॥ एवमात्मलाभदृप्त आत्मज्ञानप्रदात्रे गुरुवे नमस्करोतीत्याह नम इति— हेभगवन् ते तुभ्यं सदा नमोनमः किंस्वरूपाय अपारदयांबुधाम्ने अंबूनि धीयन्ते अस्मिन् इति अम्बुधाम समुद्रः दयाया अम्बुधाम दयांबुधाम अपारं च तद्दयांबुधाम च अपारदयाम्बुधाम तस्मै पुनर्भूम्ने विभवे नित्याद्वयानन्दरसस्वरूपेण विमुक्तसंगाय सत्सु उत्तमाय महात्मने

नमोनमस्ते गुरवे महात्मने विमुक्तसंगाय सदुत्तमाय ॥ नित्याद्वयानंदरसस्वरूपिणे भूम्ने सदापारदयाम्बुधाम्ने ॥ ८७ ॥ यत्कटाक्षशशिसांद्रचंद्रिकापातधूतभवतापजश्रमः ॥ प्राप्तवानहमखंडवैभवानंदमात्मपदमक्षयं क्षणात् ॥ ८८ ॥ धन्योहं कृतकृत्योहं विमुक्तोहं भवग्रहात् ॥ नित्यानंदस्वरूपोहं पूर्णोहंत्वदनुग्रहात् ॥ ८९ ॥

गुरुवे इत्यादि स्पष्टम् ॥ ८७ ॥ गुरूणां प्रभावं दर्शयति यदिति— यस्य गुरोः कटाक्षो दृष्टिपातः सएव शशिसांद्रचंद्रिका तस्यापातेन निवारितो भवतापजः संसारतापोद्भवः श्रमो यस्य सोहं अखण्डवैभवानंदं अक्षयमात्मपदं क्षणात्प्राप्तवानस्मि तस्मै इति ॥ ८८ ॥ इदानीं गुरुकृपापात्रमात्मानं स्तौति धन्यइति— अहंधन्योस्मि पुण्यवानस्मि तथाकृतकृत्योहं कृतं कृत्यं करणीयं येन न करणीयमवशिष्यते

इत्यर्थः कृतकृत्यत्वेहेतुमाह यतोहं भवग्रहात्संसारनक्रात् विमुक्तः तदनुग्रहात तस्य गुरोरनुग्रहात कृपातः नित्यानन्दस्वरूपपूर्णोहमिति ॥ ८९ ॥ पुनरात्मानंदपूर्णः आत्मानं विशिनष्टि असंगोहमिति– पुनश्च गुरुकृपातोऽसंगोहं तथा अनंगो देहाभिमानशून्योहं अलिंगोहं त्यक्तलिंगाभिमान इति अभंगुरः अविनाशीचेति तथा प्रशांतः अंतरहितोहं अमलः अविद्यामलरहितः चिरंतनः सदातन इत्यर्थः ॥९०॥ पुनराह अकर्तेति– अकर्ताहं अभोक्ताहं अविकारोहं अक्रियः क्रियारहितोहं शुद्धं साक्षिरूपं यज्ज्ञानं तत्स्वरूपोहं अहं केवलः सदाशिव

असंगोहमनङ्गोहमलिंगोहमभंगुरः ॥ प्रशान्तोहमनंतोहममलोहं चिरंतनः ॥ ९० ॥ अक-
र्ताहमभोक्ताहमविकारोहमक्रियः ॥ शुद्धबोधस्वरूपोहं केवलोहं सदाशिवः ॥ ९१ ॥ द्रष्टुः
श्रोतुर्वक्तुः कर्तुर्भोक्तुर्विभिन्न एवाहम् ॥ नित्यनिरंतरनिष्क्रियनिःसीमासंगपूर्णबोधात्मा ॥९२॥
नाहमिदं नाहमदोप्युभयोरभासकं परं शुद्धम् ॥ बाह्याभ्यंतरशून्यं पूर्णं ब्रह्माद्वितीयमेवाहम् ९३

एवेति ॥ ९१ ॥ आत्मनः साक्षित्वं स्फुटयति द्रष्टुरिति–मम साक्षिरूपत्वात् द्रष्टुश्चिदाभासभासितादहंकाराद्भिन्नोहं तथा तस्मादेव श्रोतुः कर्तुर्भोक्तुर्विभिन्नएवाहम् तथानित्यो निरंतरः निष्क्रियः क्रियारहितः निःसीमादेशपरिच्छेदरहितः असंगः पूर्णबोधात्मा पूर्णबोध स्वरूपश्चा-हमिति ॥ ९२ ॥ इदं इदंताविषयं प्रत्यक्षज्ञानविषयं च स्वर्गादिवदपिनाहं तर्हि कीदृशं त्वत्स्वरूपं प्रत्यक्षपरोक्षरूपयोरेतल्लोक परलोक

योरवभासकं परं शुद्धं बाह्याभ्यंतरशून्यमद्वितीयं पूर्णं ब्रह्मैवाहमिति ॥ ९३ ॥ निरुपमं उपमारहितं अनादितत्त्वं उत्पत्तिरहितं त्वमहमा-
दिकल्पनादूरं विगता यस्मात् तत् ता न विद्यंते यस्मिन् तत्तदिति नित्यंचानन्दैकरसं च तत् एतादृशं यत्सत्यमद्वितीयं ब्रह्म तदहम-
स्मीति ॥९४॥ इदानीं ममाखंडैकरसब्रह्मतादात्म्यरुढत्वात् ब्रह्मणश्च सर्वरूपत्वात्सर्वत्रात्मत्वमेव भाति न पदार्थांतरमित्याह नारायणोहमिति-

निरुपमसनादितत्वं त्वमहमिदमदइतिकल्पनादूरम् ॥ नित्यानन्दैकरसं सत्यं ब्रह्माद्वितीयमे-
वाहम् ॥ ९४ ॥ नारायणोहं नरकांतकोहं पुरांतकोहं पुरुषोहमीशः ॥ अखंडबोधोहमशेष
साक्षी निरीश्वरोहं निरहंच निर्ममः ॥ ९५ ॥ सर्वेषु भूतेष्वहमेवसंस्थितो ज्ञानात्मनांतर्बहि-
राश्रयः सन् ॥ भोक्ता च भोग्यं स्वयमेव सर्वं यद्यत्पृथग्दृष्टमिदं तयापुरा ॥ ९६ ॥

नरकस्यासुरस्यांतको विनाशकोऽथवा नरकस्य यातनाविशेषस्यांतको निवारको नारायणोहमिति तथा पुरांतकः पुराणां त्रयाणां अ-
न्तको विनाशकः शंभुरप्यहं योवा ईशोन्तर्यामी पुरुषः सोप्यहं योवाखण्डबोधः परमात्माऽशेषसाक्षी सोहमिति निरीश्वरो न विद्यते
ईश्वरो नियंता यस्य सोहं अहंताममतारहितश्चाहमिति ॥ ९५ ॥ किंबहुना स्वरूपप्राप्तेः पुरायद्यदिदंतया पृथग्दृष्टं तत्सर्वमिदानीं मद्रूपं

विं०चू० मातीत्याह सर्वेष्विति– सर्वेषु भूतेषु ज्ञानात्मनासाक्षितयाहमेवसंस्थितः अंतर्बहिः सर्वाश्रयश्चसन् अहमेवभोक्ताअहमेव भोग्यंस्वयमेवाहं सटी०
सर्वसर्वरूपमिति ॥ ९६ ॥ मय्यखंडसुखांभोधौ अखंडसुखसमुद्रे मयि विश्ववीचयः जगद्रूपास्तरंगाः बहुधा अनेकप्रकारेण मायारूपस्य अ०
॥ ८७ ॥ पवनस्य विभ्रमात् वेगात् उत्पद्यंते विलीयंतेचेत्यर्थः ॥ ९७ ॥ स्थूलादिभावादेहेंद्रियादयोऽतदधिष्ठानभूते मयि कल्पिताएव कथं यथा ए- ८

मय्यखण्डसुखांभोधौ बहुधा विश्ववीचयः ॥ उत्पद्यन्ते विलीयन्ते मायामारुतविभ्रमात् ॥९७॥
स्थूलादिभावा मयि कल्पिताभ्रमादारोपितानुस्फुरणेन लोकैः ॥ काले यथाकल्पकवत्स-
रायनर्त्वादयोनिष्कलनिर्विकल्पे ॥ ९८ ॥ आरोपितं नाश्रयदूषकं भवेत्कदापि मूढैरतिदोष-
दूषितैः ॥ नार्द्रीकरोत्यूषरभूमिभागं मरीचिकावारिमहाप्रवाहः ॥ ९९ ॥

करूपे निष्कलनिर्विकल्पे हानिवृद्धिशून्ये सकलकल्पनारहिते काले अयं ब्राह्मकल्पः अयं संवत्सरः परिवत्सरश्च इमे अयने इयमृतुरि-
त्याद्याभावाभ्रमादारोपितास्तथामयि स्थूलादिभावाः स्फुरणेन प्रतीत्या लोकैर्विवेकशून्यैरारोपिता न वास्तवा इत्यर्थः ॥ ९८ ॥ इदानीं म- ॥ ८७ ॥
येदं साक्षादनुभूतं किं तदित्यतआह आरोपितमिति— यदारोपितं भ्रमात्कल्पितं वस्तु तत्कदापि आश्रयदूषकं अधिष्ठानस्यान्यथात्वप्र-

ऽतिपादकं न भवति कुतः यतस्तदतिदोषदूषितैरधिष्ठानाज्ञानदोषदूषितैर्मूढैरारोपितं अत्रोपपत्तिमाह मरीचिकावारिमहाप्रवाहः ग्रीष्मकाले ऽतितृषितमृगैः परिकल्पितः मरुभूमौ चन्द्रांशुप्रकाशितायां रात्रौ मध्याह्ने सूर्यांशुप्रकाशितायां वा मरीचिकायां मृगतृष्णायां मृगाणां तृष्णास्त्यस्यामितिमृगतृष्णा मरीचिकेति कोशात् जलवतीवावभासमाना मरुभूमिः तत्र प्रतीतो वारिप्रवाहः जलप्रवाहः स यथा यत्रोषरभूमिभागे कल्पितस्तमूषरभूमिभागं नार्द्रीकरोति जलेन युक्तं न करोति तथान्यदपि कल्पितं वस्तु स्वाश्रयदूषकं न भवतीत्यर्थः ॥ ९९ ॥

आकाशवल्लेपविदूरगोहमादित्यवद्भास्यविलक्षणोहम् ॥ अहार्यवन्नित्यविनिश्चलोहमंभोधिवत्पारविवर्जितोहम् ॥ ५०० ॥

स्वस्यासंगत्वे निदर्शनान्याह आकाशेति– अहमाकाशवत् यथाकाशो मेघधूल्यादिभिर्वस्तुतो लिप्तो न भवति तथाहमप्यहमादिलेपात् संसर्गाद्दूरगोरहित इति तथादित्यवत् यथादित्यः स्वभास्येभ्यो घटादिभ्यो विलक्षणः तथाहमपि स्वप्रकाश्येभ्यो बुद्ध्यादिदेहांतेभ्यो विलक्षणः तथाऽहार्यवत् निश्चलोहं तथांभोधिवत्पारवर्जितः यथांभोधेः समुद्रस्य पारः केनापि पुरुषेणेह लोकस्थेनावरतीरस्थेन न दृश्यते तथा-

हमपिपारविवर्जितः अंतरहित इत्यर्थः ॥ ५०० ॥ जाग्रदादिधर्मोऽपि मे न संतीत्याह नम इति— देहेन मे संबंधोनास्ति यथा मेघेना-
काशचारिणा विहायस आकाशस्य संबंधो नास्ति अतः कारणात् तद्धर्मास्तस्य देहस्य धर्मा जाग्रत्स्वप्नसुषुप्तयो मे कुतोन कुतोपीत्यर्थः ॥५०१॥

जन्मादयो धर्मा अपि मे न संति किंतूपाधेरेवेत्याह उपाधिरिति— लिंगशरीररूपोपाधिर्जन्मनः पूर्वं शरीरमायाति प्राप्नोति जायत

नमे देहेन संबंधो मेघेनेव विहायसः ॥ अतः कुतोमे तद्धर्मा जाग्रत्स्वप्नसुषुप्तयः ॥ ५०१ ॥
उपाधिरायाति स एव गच्छति स एव कर्माणि करोति भुङ्क्ते ॥ सएव जीर्यन् म्रियते सदाहं
कुलाद्रिवन्निश्चलएव संस्थितः ॥ २ ॥ न मे प्रवृत्तिर्न च मे निवृत्तिः सदैकरूपस्य निरंश-
कस्य ॥ एकात्मकोयो निविडो निरंतरो व्योमेव पूर्णः स कथं नु चेष्टते ॥ ३ ॥

इव सएवोपाधिः मरणकाले शरीरं त्यक्त्वा गच्छति देहांतरमितिशेषः सएवोपाधिः शरीरस्य कर्माणि करोति सएव पूर्वार्जितकर्मफलं
प्रारब्धानांफलं भुंक्ते सएव शरीरे जीर्यति जीर्यन्निवभूत्वा म्रियतेऽहं तु कुलाद्रिवत् वर्षादिषु पर्वतवत् निश्चलः स्थितइति ॥ २ ॥ समा- 
धावनुभूतमात्मस्वरूपमाह नम इति— नमे कुत्रापि प्रवृत्तिर्नमे कुतोपि निवृत्तिः तत्रहेतुमाह सदाएकरूपस्य निरंशकस्य प्रवर्तव्यनिव-

तव्याभावात् यः पदार्थएकात्मक एकरसः निविडः सघनः निरंतरः अंतरशून्यव्योमइव आकाशवत् पूर्णः स कथं विचेष्टते न विचेष्टत इत्यर्थः ॥ ३ ॥ स्वयंप्रकाशत्वेन शरीरेंद्रियान्तःकरणाद्यपेक्षारहितं तद्धर्मा न स्पृशंतीत्याह पुण्यानीति— देहेन्द्रियादिद्वारैव पुण्यपापोत्पत्तिर्भवति निरिन्द्रियस्य निश्चेतसोऽन्तःकरणरहितस्य निराकृतेः शरीररहितस्य निर्विकृतेः परिणामादिरहितस्य च मे पुण्यानि पापानि

पुण्यानि पापानि निरिन्द्रियस्य निश्चेतसो निर्विकृतेर्निराकृतेः ॥ कुतो ममाखण्डसुखानुभूतेर्ब्रूतेह्यनन्वागतमित्यपि श्रुतिः ॥ ४ ॥ छायया स्पृष्टमुष्णंवाशीतंवासुष्ठु दुष्टुवा ॥ न स्पृशत्येव यत्किंचित्पुरुषं तद्विलक्षणम् ॥ ५ ॥ न साक्षिणं साक्ष्यधर्माः संस्पृशंति विलक्षणम् ॥ अविकारमुदासीनं गृहधर्माः प्रदीपवत् ॥ ६ ॥

च न सन्ति यथा बृहदारण्यश्रुतिरपि ब्रूते यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गोह्ययं पुरुष इति ॥ ४ ॥ चिदाभासस्य छायातुल्यत्वान्मद्वास्तवरूपस्यासङ्गत्वाद्बाह्यान्तर्विषयसंबंधो मम न संभवतीत्याह छाययेति— पुरुषस्य छायया स्पृष्टमुष्णमग्न्यादिशीतं वा जलादि सुष्ठु गंगाजलं दुष्टु विषमलादिकं वा छायाविलक्षणं पुरुषं यत्किंचिदपि न स्पृशतीति ॥ ५ ॥ पुनरप्याह नेति— अविकारमुदा-

सीनं विलक्षणं साक्षिणं द्रष्टारं साक्ष्यधर्मा दृश्यधर्मानस्पृशंति यथा गृहधर्मा गृहप्रकाशकं दीपं न स्पृशंति तद्वदिति ॥ ६ ॥ आत्मनोऽसंगत्वे अन्यान्यपि निदर्शनान्याह रवेरिति— रविप्रकाशेक्रियमाणे कर्मणि यथा रवेः साक्षिभावो न कर्मसंबंधः तथा वह्नेर्यथा दाहनियामकत्वं काष्ठादीनां दाहशक्तिप्रदत्वं न विकृतिः। सर्पभ्रमाधिष्ठानभूताया रज्जोर्यथा नारोपितसर्पसंगस्तथा कूटस्थचिदात्मनो मे नानात्मव-

रवेर्यथा कर्मणि साक्षिभावो वह्नेर्यथा दाहनियामकत्वम् ॥ रज्जोर्यथारोपितवस्तुसंगस्तथै-
वकूटस्थचिदात्मनो मे ॥ ७ ॥ कर्तापि वा कारयितापि नाहं भोक्तापि वा भोजयितापि
नाहम् ॥ द्रष्टापि वा दर्शयितापि नाहं सोहं स्वयंज्योतिरनीदृगात्मा ॥ ८ ॥ चलत्युपाधौ
प्रतिबिम्बलौल्यमौपाधिकं मूढधियो नयन्ति ॥ स्वबिम्बभूतं रविवद्विनिष्क्रियं कर्तास्मि
भोक्तास्मि हतोस्मि हेति ॥ ९ ॥

स्तुसंबंध इति ॥ ७ ॥ असङ्गत्वमाह कर्तेति— कर्ता कारयिता वा तथा भोक्ता भोजयिता वा तथा द्रष्टा दर्शयिता वा नाहमस्मि अनीदृक् एतद्विलक्षणः स्वयं ज्योतिः स्वयंप्रकाशोऽसङ्ग एवाहमस्मीत्यर्थः ॥ ८ ॥ अत्र दृष्टान्तमाह चलतीति— यथा जलाद्युपाधौ चलति सति

रविप्रतिबिंबचांचल्यं मूढधियो बिंबभूतं रविं नयन्ति प्रापयंति रविश्चलतीति एवं बुद्ध्युपाधिकृतचिदाभासचांचल्यं निष्क्रियं शुद्ध-मात्मानं नयंति प्रापयंति कर्तास्मि भोक्तास्मि हतोस्मि हेत्यनात्मज्ञाइति ॥ ९ ॥ दार्ष्टान्तमाह एषदेहोजडात्मको जलेवापि स्थलेवा लुठतु अहंतद्धर्मैर्नलिप्ये नसंबंधं प्राप्नोमि यथाकाशस्थघटधर्मैर्घटाकाशधर्मैर्गंधाद्यैर्नभः आकाशोऽसंगो न लिप्यते तद्वदित्यर्थः ॥ १० ॥

जले वापि स्थले वापि लुठत्वेष जडात्मकः ॥ नाहं विलिप्ये तद्धर्मैर्घटधर्मैर्नभो यथा ॥ १० ॥
कर्तृत्वभोक्तृत्वखलत्वमत्तता जडत्वबद्धत्वविमुक्ततादयः ॥ बुद्धेर्विकल्पा न तु संति वस्तुतः
स्वस्मिन्परे ब्रह्मणि केवलेऽद्वये ॥ ११ ॥ सन्तु विकाराः प्रकृतेर्दशधा शतधा सहस्रधा वापि ॥
किंमेऽसङ्गचितस्तैर्न घनः क्वचिदम्बरं स्पृशति ॥ १२ ॥

ब्रह्मणः सर्वविकल्परहितत्वमाह कर्तृत्वेति- स्वस्मिन्स्वात्मस्वरूपे अद्वये केवले परे ब्रह्मणि इमे बुद्धेर्विकल्पास्तु न संति के ते विकल्पा इम इत्याह कर्तृत्वं भोक्तृत्वं खलत्वं दुष्टत्वं तथा मत्तता असावधानता जडत्वं बद्धत्वं मुक्ततेत्यादयइति ॥ ११ ॥ तेषामुपेक्षामाह इमे प्रकृतेर्विकाराः दशधा दशप्रकाराः शतधा सहस्रधा वापि संतु असंगचितः असंगरूपस्य चिद्रूपस्य मे तैर्विकारैः किंदूषणं स्यान्न किम-

पीत्यर्थः अत्र दृष्टान्तः घनो मेघः क्वचिदपि अम्बरमाकाशं न स्पृशति मलिनं न करोतीत्यर्थः ॥ १२ ॥ ब्रह्मस्वरूपमाह अव्यक्तेति— व्योमप्रख्यं आकाशतुल्यं सूक्ष्ममाद्यन्तहीनं यदद्वैतं ब्रह्म तदेवाहमस्मि किंरूपं तदित्यतआह अव्यक्तादिस्थूलपर्यंतं विश्वं यत्र ब्रह्मणि आभासमात्रं प्रतीतं न सत्यमित्यर्थः ॥ १३ ॥ पुनरपि ब्रह्मविशेषणान्याह सर्वाधारं सर्ववस्तुप्रकाशं सर्वाकारं उपाधिभेदेन सर्वाकारं सर्वगं



अव्यक्तादिस्थूलपर्यन्तमेतद्विश्वं यत्राभासमात्रं प्रतीतम् ॥ व्योमप्रख्यं सूक्ष्ममाद्यन्तहीनं
ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥ १३ ॥ सर्वाधारं सर्ववस्तुप्रकाशं सर्वाकारं सर्वगं सर्वशून्यम् ॥
नित्यं शुद्धं निश्चलं निर्विकल्पं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥ १४ ॥ यत्प्रत्यस्ताशेषमायावि-
शेषं प्रत्यग्रूपं प्रत्ययागम्यमानम् ॥ सत्यज्ञानानन्तमानन्दरूपं ब्रह्माद्वैतं यत्तदेवाहमस्मि ॥१५॥

परिपूर्णं सर्वशून्यं स्वरूपतः सर्वविकृतिशून्यं नित्यं शुद्धं निश्चलं निर्विकल्पं एतादृगद्वैतं यद्ब्रह्म तदहमस्मीति ॥१४॥ पुनरप्याह यदिति— यद्ब्रह्मप्रत्यस्ता दूरीभूता मायाया विशेषा विकारा यस्मात् तत् प्रत्यग्रूपं सर्वगतं प्रत्ययेन बुद्धिवृत्त्या अगम्यमानमविषयीकृतं सत्यं सद्रूपं ज्ञानं चैतन्यरूपमनन्तं देशकालवस्तुकृतपरिच्छेदशून्यमानन्दरूपं निरतिशयानन्दरूपमेतादृगद्वैतं यद्ब्रह्म तदहमस्मीति ॥ १५ ॥

निष्क्रियोस्मि क्रियारहितोस्मि अविकारोस्मि निष्कलोस्मि हानिवृद्धिरहितोहं निराकृतिः मूर्तिरहितोहं निर्विकल्पोस्मि संशयहीनोहं नित्योस्मि निरालम्बः आश्रयापेक्षारहितः निर्द्वय एकएवाहमिति ॥ १६ ॥ पुनरप्याह सर्वात्मकोहं सर्वोहं द्वितीयप्रतीतिरहितोहं सर्वातीतोहं अद्वयः एकोहं केवलाखण्डबोधोहं एकरसपरिपूर्णबोधोहं आनन्दोहं निरंतरमिति ॥ १७ ॥ स्वे स्वरूपे राजते स्वराट् आत्मज्ञः

निष्क्रियोस्म्यविकारोस्मि निष्कलोस्मि निराकृतिः ॥ निर्विकल्पोस्मि नित्योस्मि निरालम्बोस्मि निर्द्वयः ॥ १६ ॥ सर्वात्मकोहं सर्वोहं सर्वातीतोहमद्वयः ॥ केवलाखंडबोधोहमानंदोहं निरंतरम् ॥ १७ ॥ स्वाराज्यसाम्राज्यविभूतिरेषा भवत्कृपाश्रीमहिमप्रसादात् ॥ प्राप्ता मया श्रीगुरवे महात्मने नमो नमस्तेस्तु पुनर्नमोस्तु ॥ १८ ॥

स्वराजोभावः स्वाराज्यं साम्राज्यं च स्वतंत्रराज्यं स्वाराज्यमेव साम्राज्यं स्वाराज्यसाम्राज्यं स्वाराज्यसाम्राज्यमेव विभूतिरैश्वर्यं स्वाराज्यसाम्राज्यविभूतिः एषा प्रत्यक्षसिद्धा भवत्कृपा भवदनुग्रहएव श्रीमहिमप्रसादात् श्रीमतां महिमा श्रीमहिमा भवदीयप्रभावः सामर्थ्यं

 तत्प्रसादान्मया प्राप्ता एषा विभूतिः एतादृशमहिमवते महात्मने श्रीगुरवे ते नमोस्तु पुनर्नमोस्त्वित्वति ॥ १८ ॥ गुरुकृतोपकारं दर्शयति 
महास्वप्नइति— हे गुरो भवान् मां मायाकृतजनिजरामृत्युगहने महास्वप्ने भ्रमन्तं बहुलतरतापैरनुदिनं क्लिश्यंतं अहंकारव्याघ्रव्यथितं
 इमं प्रत्यक्षतया सन्मुखस्थितं अत्यंतकृपया प्रस्वापात् प्रबोध्य परमतिशयेनावितवानसि रक्षितवानसि ॥ १९ ॥ तस्मै ते नमः कथंभू- 

महास्वप्ने मायाकृतजनिजरामृत्युगहने भ्रमंतं क्लिश्यंतं बहुलतरतापैरनुदिनम् ॥ अहं-
कारव्याघ्रव्यथितमिममत्यन्तकृपया प्रबोध्य प्रस्वापात्परमवितवान् मामसि गुरो ॥ १९ ॥
नमस्तस्मै सदैकस्मै कस्मैचिन्महसे नमः ॥ यदेतद्विश्वरूपेण राजते गुरु राजते ॥ २० ॥
इति नतमवलोक्य शिष्यवर्य्यं समधिगतात्मसुखं प्रबुद्धतत्वम् ॥ प्रमुदितहृदयं सदेशिकेन्द्रः
पुनरिदमाह वचः परं महात्मा ॥ २१ ॥

ताय सदैकस्मै सदैकरूपाय हे गुरुराज तथा ते तव कस्मै चिन्निरूपितुमशक्याय महसे स्वरूपभूताय तेजसे नमः ॥ कीदृशे महसे यन्मह 
एतद्विश्वरूपेण राजते त्वमेवाखंडानन्दैकरसः परिपूर्णार्णव इवाभासीत्यर्थः ॥ २० ॥ स्वात्मानन्दसरिद्विमिश्रितपरात्माम्भोनिधेराततं मा-

हात्म्यं मनसावगन्तुमथनो वक्तुं गिरा शक्यते ॥ लीनं तत्र न भाति विश्वमचले सिन्धौ तरंगा यथेत्युक्तं सद्गुरुणा विवेकक्रमणाख्या-
यके चाष्टमे ॥ ८ ॥ इति श्रीजगाधरीनगरस्थसारस्वतवंशावतंसश्रीमन्मिश्रहरिधनपुरोहितात्मजवेदान्तनिष्ठपण्डितहरिनामदत्तविरचि-
तायां विवेकचूडामणिटीकायां सुबोधिन्यां जीवन्मुक्तिशोकापनोदप्राप्तिनिरूपणोनामाष्टमोऽध्यायः ॥ ८ ॥ ज्ञातज्ञेयं शिष्यंप्रति गुरुकृत्य-
माह इतीति— स देशिकेन्द्रः सद्गुरुर्महात्मा पुनरिदं परमुत्कृष्टं वच आह कथंभूतः सच्छिष्यवर्य्यं शिष्योत्तमं प्रबुद्धतत्त्वं समधिगतात्म-

**ब्रह्मप्रत्ययसंततिर्जगदतो ब्रह्मैव सत्सर्वतः ॥ पश्याध्यात्मदृशा प्रशान्तमनसा सर्वास्ववस्था-**
**स्वपि॥ रूपादन्यदवेक्षितं किमभितश्चक्षुष्मतां दृश्यते तद्वद्ब्रह्मविदः सतः किमपरं बुद्धे-**
**र्विहारास्पदम् ॥ २२ ॥**

सुखं प्राप्तानंदं इति उक्तप्रकारेण नतं प्रणतमवलोक्य प्रमुदितहृदयइति ॥ २१ ॥ वचनमेवाह ब्रह्मेति— विदुषः सर्वत्र ब्रह्मप्रत्ययातिरि-
क्तप्रत्ययासंभवात्ब्रह्मप्रत्ययानां सन्ततिर्नैरंतर्य्येण प्रतीतिर्जगदस्ति न ततो भिन्नमस्ति अतः सर्वतः सर्वदिक्षु ब्रह्मैवसत् अस्तीत्यध्यात्म-
दृशा सर्वत्रात्मबुद्ध्या सर्वास्ववस्थास्वपि प्रशांतमनसा त्वं पश्य नानाविशेषविशेषितरूपवत्पदार्थेष्वनपेक्षितविशेषदर्शनाकाङ्क्षिणां चक्षु-
ष्मतामभितः सर्वतोवेक्षितं चक्षुर्विषयवस्तुरूपादन्यत्किमस्ति नकिमपीत्यर्थः चक्षुषो रूपमात्रग्राहित्वाद्विशेषदृष्टेश्च मनोधर्मत्वात् तद्वद्

ब्रह्मविदः सर्वत्र ब्रह्मदर्शनशीलस्य बुद्धेर्विहारास्पदं आत्मबुद्धया यद्यद्दृश्यते सतोब्रह्मणोऽपरं किं न किमपीत्यर्थः ॥ २२ ॥ सत्यं दृष्ट्वा मि-
थ्याभूते प्रवृत्तिर्न संभवतीत्याह कस्तामिति— तां पूर्वोक्तां परानंदरसानुभूतिं समुत्सृज्य को विद्वान् शून्येषु परमार्थशून्येषु पदार्थेषु
 रमेत तत्र दृष्टान्तमाह महाह्लादिनि आनन्ददायिनि चंद्रे दीप्यमाने प्रकाशमाने सति चित्रेंदुं चित्रलिखितेन्दुं क आलोकयितुमिच्छेत् न 

कस्तां परानन्दरसानुभूतिमुत्सृज्य शून्येषु रमेत विद्वान् ॥ चन्द्रे महाल्हादिनि दीप्यमाने
चित्रेंदुमालोकयितुं क इच्छेत् ॥ २३ ॥ असत्पदार्थानुभवेन किंचिन्नह्यस्ति तृप्तिर्न च दुःख-
हानिः ॥ तदद्वयानन्दरसानुभूत्या तृप्तः सुखं तिष्ठ सदात्मनिष्ठया ॥ २४ ॥ स्वमेव सर्वथा
पश्यन्मन्यमानः स्वमद्वयम् ॥ स्वानन्दमनुभुञ्जानः कालं नय महामते ॥ २५ ॥

कोपीत्यर्थः ॥ २३ ॥ प्रयोजनाभावादप्यसत्प्रवृत्तिर्न कार्येत्याह असदिति— यतः कारणादसत्पदार्थानुभवेन किञ्चिदपि तृप्तिर्नह्यस्ति न च
दुःखहानिरस्ति तत्तस्माददद्वयानन्दरसानुभूत्या तृप्तः सन् सदात्मनिष्ठया सुखं तिष्ठेति ॥ २४ ॥ कर्तव्यार्थमाह स्वमेवेति— सर्वथा सर्वप्रका- 
रेण स्वमेव स्वात्मानमेव पश्यन् तथा स्वमात्मानमद्वयं अद्वितीयं मन्यमानः स्वानन्दं स्वरूपभूतमानन्दं अनुभुञ्जानः अनुभवन् उदारबुद्धे

त्वं कालं नय शेषायुः क्षपयेत्यर्थः ॥ २५ ॥ जीवन्मुक्तस्य तव सर्वाकाङ्क्षानिवृत्तेरिदानीं विदेहमुक्तिसुखमनुभवन्नखंडानन्दात्मैक्यं विदेह-मुक्तेः परां काष्ठां देहं त्यक्त्वा प्राप्नुहीत्याह अखण्डेति— निर्विकल्पे विकल्परहितेऽखंडबोधात्मनि यद्विकल्पनं तद्व्योम्नि निरवयवाकाशे पुरप्रकल्पनं नगरारोपणवदसंभावितं तत्तस्माददद्वयानन्दमयात्मना सदा परां शान्तिमेत्य मौनं भजस्व पुनरुत्थानाशां त्यजेत्यर्थः

अखण्डबोधात्मनि निर्विकल्पे विकल्पनं व्योम्नि पुरप्रकल्पनम् ॥ तदद्वयानन्दमयात्मना सदा शान्तिं परामेत्य भजस्व मौनम् ॥ २६ ॥ तूष्णीमवस्था परमोपशान्तिर्बुद्धेरसत्कल्पविकल्प-हेतोः ॥ ब्रह्मात्मना ब्रह्मविदो महात्मनो यत्राद्वयानन्दसुखं निरन्तरम् ॥ २७ ॥ नास्ति निर्वासनान्मौनात्परं सुखकृदुत्तमम् ॥ विज्ञातात्मस्वरूपस्य स्वानन्दरसपायिनः ॥ २८ ॥

॥ २६ ॥ आत्मसुखस्य परत्वमाह तूष्णीमिति— महात्मनो ब्रह्मविदः असत्कल्पविकल्पहेतोः असतां मिथ्याभूतानां विकल्पानां हेतोर्हेतुभूताया बुद्धेर्या ब्रह्मात्मना तूष्णीमवस्था सा एव परमोपशांतिः परमं सुखं यद्यस्मात्कारणात् तस्यां स्थितावद्वयानन्दसुखं निरंतरं भवतीति ॥ २७ ॥ निर्वासनमौनमहिमानमाह नास्तीति— विज्ञातात्मस्वरूपस्य स्वानन्दरसपायिनः स्वात्मानन्दरसानुभवशीलस्य

निर्वासनान्मौनात्परमन्यदुत्तमं सुखकृत्किमपि नास्तीति ॥ २८ ॥ आत्मानन्दानुभवे कश्चिन्नियमो नास्तीत्याह गच्छन्निति— आत्मारामो मुनिर्गच्छन् तिष्ठन् उपविशन् शयानोवा अन्यथा अन्यप्रकारेण वा वदन् पश्यन्नित्यादिना यथेच्छया विद्वान् वसेदिति ॥ २९ ॥ संसिद्ध-तत्वस्य ज्ञातात्मयाथात्म्यस्य महात्मन उदारचित्तस्य प्रतिबद्धा स्थिरीभूता वृत्तिर्यस्य निश्चलात्मनः दिक्कालासनदेशयमनियमाद्यपेक्षा

गच्छंतिष्ठन्नुपविशञ्छयानो वान्यथापि वा ॥ यथेच्छया वसेद्विद्वानात्मारामः सदामुनिः ॥ २९ ॥
न देशकालासनदिग्यमादिलक्ष्याद्यपेक्षा प्रतिबद्धवृत्तेः ॥ संसिद्धतत्त्वस्य महात्मनोस्ति स्ववे-
दने का नियमाद्यवस्था ॥ ३० ॥ घटोयमिति विज्ञातुं नियमः कोन्वपेक्ष्यते ॥ विनाप्रमा-
णसुष्ठुत्वं यस्मिन्सति प्रमाणधीः ॥ ३१ ॥ अयमात्मा नित्यसिद्धः प्रमाणेसति भासते ॥
न देशं वापि नो कालं न शुद्धिं वाप्यपेक्षते ॥ ३२ ॥

तथा लक्ष्यापेक्षावा नास्ति स्वात्मन एव लक्ष्यत्वादित्यर्थः ॥ ३० ॥ अत्र दृष्टान्तमाह घटोयमिति— अयं घट इति घटं विज्ञातुं नु को नियमोऽपेक्ष्यते न कोपीति किन्तु प्रमाणानां चक्षुरादीनां सुष्ठुत्वं पटुतां विना चक्षुरादिसुष्ठुत्वमेवापेक्ष्यते यस्मिन् प्रमाणसुष्ठुत्वेसति पदा-र्थधीर्भवतीति ॥ ३१ ॥ एवमयमात्मा नित्यसिद्धः देशं कालं शुद्धिं वा नापेक्षते किंतु प्रमाणमात्मज्ञगुरूपदिष्टं महावाक्यज्ञानं प्रमाणम- ॥ ९३ ॥

पेक्षते ह्यात्मप्रवणत्वे इत्यर्थः ॥ ३२ ॥ साम्यमाह देवदत्तेति— यथा देवदत्तस्य देवदत्तोऽहमिति विज्ञानं निरपेक्षकं देशकालासनाद्यपेक्षारहितं भवति तथाऽस्य ब्रह्मविदोपि ब्रह्माहमिति वेदनं हृदि चिंतनं देशकालाद्यपेक्षारहितमेव भवतीत्यर्थः ॥ ३३ ॥ आत्मसमाधेः सुकरत्वे दृष्टान्तमाह भानुनेति— यथा भानुना सूर्येण प्रकाशितं सत्सर्वं जगद्भासते न तत्र प्रकाशकान्तरापेक्षास्ति एवं यस्य तेजसा इदं

देवदत्तोऽहमित्येतद्विज्ञानं निरपेक्षकम् ॥ तद्वद्ब्रह्मविदोप्यस्य ब्रह्माहमिति वेदनम् ॥ ३३ ॥
भानुनेव जगत्सर्वं भासते यस्य तेजसा ॥ अनात्मकमसत्तुच्छं किंनु तस्यावभासकम् ॥ ३४ ॥
वेदशास्त्रपुराणानि भूतानि सकलान्यपि ॥ येनार्थवन्ति तं किंनु विज्ञातारं प्रकाशयेत् ॥ ३५ ॥
एष स्वयंज्योतिरनन्तशक्तिरात्माप्रमेयः सकलानुभूतिः ॥ यमेव विज्ञाय विमुक्तबंधो जयत्ययं ब्रह्मविदुत्तमोत्तमः ॥ ३६ ॥

सर्वं जगदसद्भूतं मिथ्यारूपं तुच्छं शुक्तिरजतवदविद्यमानमेवानात्मकं स्वरूपरहितं भासते तस्य भासकं किंनु अपेक्षणीयं नापेक्षणीयमित्यर्थः ॥ ३४ ॥ अन्यदाह वेदेति— वेदशास्त्रपुराणानि सकलानि ब्रह्मादिस्थावरांतानि भूतानि अपि केवलं ज्ञेयरूपाण्येव विज्ञेयस्य विज्ञातारं किंनु किं वस्तुप्रकाशयेत् न किमपि स्वप्रकाशत्वादित्यर्थः ॥ ३५ ॥ एष आत्मा स्वयंज्योतिः स्वयंप्रकाशः अनंतशक्तिः अचिं-

विं०चू० त्यशक्तिः आत्माव्यापकः अप्रमेयः प्रमाणाविषयः सकलानुभूतिः सर्वद्रष्टायमात्मानं विज्ञायायं ब्रह्मविदुत्तमोत्तमः विमुक्तबंधनो जयति सटी०
सर्वोपरिवर्त्तेत इत्यर्थः ॥ ३६ ॥ नखिद्यतेऽति दुःखेपि न ग्लायते विषयैः सुखसाधनैः न प्रमोदते न कुत्रचित्सज्जते कस्मादपि न विरज्यते
॥ ९४ ॥ च बहिर्दृष्ट्यभावात् स्वस्मिन्नात्मन्येव सदाक्रीडति लीलांकरोति आत्मन्येव नंदति सकलैश्वर्यसमृद्धवद्भवति निरंतरानंदरसेनतृप्तः सन् न अ०

न खिद्यते नोविषयैः प्रमोदते न सज्जते नापि विरज्यते च ॥ स्वस्मिन्सदा क्रीडति नन्दति स्वयं ९
निरंतरानन्दरसेन तृप्तः ॥३७॥ क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि ॥ तथैव विद्वान्
रमते निर्ममो निरहं सुखी ॥ ३८ ॥ चिन्ताशून्यमदैन्यभैक्षमशनं पानं सरिद्वारिषु स्वातं-
त्र्येण निरङ्कुशास्थितिरभीर्निद्राश्मशाने वने ॥ वस्त्रं क्षालनशोषणादिरहितं दिग्वास्तु
शय्या मही संचारो निगमान्तवीथिषु विदां क्रीडा परे ब्रह्मणि ॥ ३९ ॥

किंचिदपीच्छतीत्यर्थः आत्मानन्दएव सर्वसुखानामन्तर्भूतत्वात् ॥ ३७ ॥ दृष्टान्तमाह क्षुधामिति–बालो वस्तुनि क्रीडाविषये सक्तः क्षुधां
देहव्यथां त्यक्त्वा यथा क्रीडति तथा विद्वान् निर्ममो निरहंकृतिरात्मन्येव सुखी रमते ॥ ३८ ॥ आत्मविदां व्यवहारमाह चिन्तेति— विदा- ॥ ९४ ॥
मात्मविदामशनं भोजनं तु चिन्ताशून्यं दैन्यरहितं भैक्षं भिक्षान्नमेव सरिद्वारिषु नदीजलेषु तेषां पानं जलपानं तेषां स्थितिस्तु स्वातन्त्र्येण

निरंकुशा पराधीनतारहिता अभीर्भयरहिता निद्राशयनं श्मशाने श्मशानसमीपे अधिकस्त्रीजनप्रचाररहिते निर्ज्जने वने वा वस्त्रं तेषां क्षालनशोषणादिरहितं दिक् नग्नत्वमेव वाशब्दाद्वल्कलादिकं वास्ति अत्यंतशीतकाले तेषां शय्यातु पृथिव्येव तेषां संचारश्चङ्क्रमणं निगमान्तवीथिषु वेदान्तनगरवीथिषु तथा क्रीडा परे ब्रह्मण्येव नान्यत्रेत्यर्थः ॥ ३९ ॥ विदुषो वर्तनं देवतुल्यमित्याह विमानेति— य आत्मवेत्ताऽव्यक्तलिंगोऽप्रकटितवर्णाश्रमाचारः अननुषक्तबाह्यः बाह्यविषयानपेक्षः स एतच्छरीरमेव विमानं सर्वाभिमानरहितं अवलंव्य

विमानमालंब्य शरीरमेतद्भुनक्त्यशेषान् विषयानुपस्थितान् ॥ परेच्छया बालवदात्मवेत्ता योऽव्यक्तलिङ्गोऽननुषक्तबाह्यः ॥ ४० ॥ दिगम्बरोवापि च साम्बरोवा त्वगंबरो वापि चिद-म्बरस्थः ॥ उन्मत्तवद्वापि च बालवद्वा पिशाचवद्वापि चरत्यवन्याम् ॥ ४१ ॥

स्वारोहणार्थमाश्रित्य बालवत्परेच्छया उपस्थितान् अशेषभोगान् भोजनाच्छादनोपयोगिनो विषयान् भुनक्ति न स्वेच्छया किंचिदि-च्छतीत्यर्थः ॥ ४० ॥ अन्यदप्याह दिगम्बरइति— दिगम्बरो वा स्वतः अपि च परेच्छया क्वचित्सांबरोवा धृतवस्त्रोपि क्वचिद्वनादौ शीताधिक्ये त्वगंबरोवा धृतभूर्ज्यादि हृदये नतु चिदंबरस्थः परिपूर्णात्मनि स्थितः उन्मत्तवद्वा प्रमादिजनविक्षेपनिवारणाय बालवद्वा

साधुजनेषु पिशाचवद्वापि बहुजनसंसर्गनिवृत्यर्थं एवं विद्वान् अवन्यां चरति स्वानन्दतृप्तः सन्नित्यर्थः ॥ ४१ ॥ आत्मनिष्ठस्य विदेहमुक्तबुभूषोः पूर्वलक्षणमाह कामादिति— कामाच्चिरकालाभ्यस्तस्वभावादेव निष्कामरूपी सन् मुनिः एकचरः एकाकी चरति विचरति नतु वस्त्वन्तरापेक्षः स्वात्मनैव सदातुष्टः स्वयमेव सर्वात्मा पूर्णात्मना स्थित इति ॥ ४२ ॥ नसलोकैर्बुद्धयते अनेकरूपत्वादित्याह क्वचिदिति— क्वचिन्मूढो भाति क्वचिच्च परेच्छातः सत्कृतो महाराजविभवो भाति क्वचिद्भ्रान्तो दुर्जनसंगनिवृत्यर्थं क्वचित्सौम्यः क्वचिदजगराचारेण

कामान्निष्कामरूपीसंश्चरत्येकचरो मुनिः॥ स्वात्मनैव सदातुष्टः स्वयंसर्वात्मनास्थितः ॥४२॥
क्वचिन्मूढो विद्वान् क्वचिदपि महाराजविभवः क्वचिद्भ्रांतः सौम्यः क्वचिदजगराचारकलितः॥
क्वचित्पात्रीभूतः क्वचिदवमतः क्वाप्यविदितश्चरत्येवं प्राज्ञः सततपरमानन्दसुखितः ॥ ४३ ॥
निर्धनोपि सदातुष्टोप्यसहायो महाबलः ॥ नित्यतृप्तोप्यभुञ्जानोप्यसमः समदर्शनः ॥ ४४ ॥

कलितो युक्तः स्थानप्राप्तभिक्षः क्वचित्पात्रीभूतोऽभिज्ञजनसमागमे क्वचिदवमतोऽनभिज्ञजनभिक्षाग्रहणे क्वापि क्वचिदपि अविदितः सर्वत्र ख्यातिशून्यः एवं प्राज्ञः सततपरमानन्दसुखितः नैरंतर्येण परानन्दमग्नश्चरतीत्यर्थः ॥४३॥ तस्यान्येभ्यो वैलक्षण्यमाह निर्द्धनइति— स विद्वान्निर्धनोऽपि सदा तुष्टो न तु दीनो भवति निरपेक्षत्वात् असहायोपि द्वितीयसंगरहितोपि महाबलः भयहेतोरभावात् अभुंजानोपि

नित्यतृप्तोऽविकार्यात्मनिश्चयात् स्वयमसमः एकोपि सर्वत्र समदर्शन इत्यर्थः ॥ ५४ ॥ व्यवहारदृष्ट्या भोजनादिकुर्वन्नपि स्वरूपतः अकुर्वाणः तथा सुखदुःखादिफलभोग्यपि स्वरूपतोऽभोक्ता शरीरी अपि शरीरस्थोपि अशरीरीएव त्यक्तदेहाभिमानत्वात् देहदृष्ट्या परिच्छिन्नोपि स्वरूपेण परिपूर्ण इत्यर्थः ॥ ४५ ॥ अत्र श्रुतितात्पर्यमाह अशरीरमिति— एनमात्मज्ञमशरीरं देहाभिमानशून्यं सन्तं प्रिया-

अपि कुर्वन्नकुर्वाणश्चाभोक्ता फलभोग्यपि ॥ शरीर्यप्यशरीर्येष परिच्छिन्नोपि सर्वगः ॥ ४५ ॥
अशरीरं सदासन्तमिमं ब्रह्मविदं क्वचित् ॥ प्रियाप्रिये न स्पृशत तथैव च शुभाशुभे ॥ ४६ ॥
स्थूलादिसंबंधवतोभिमानिनः सुखं च दुःखं च शुभाशुभे च ॥ विध्वस्तबंधस्य सदात्मनो मुनेः
कुतः शुभं वाप्यशुभं फलं वा ॥ ४७ ॥

प्रिये न स्पृशतः सुखदुःखेनोत्पादयत इत्यर्थः तथैवच शुभाशुभे पुण्यपापे न स्पृशत इत्यर्थः ॥ ४६ ॥ अत्रोपपत्तिमाह स्थूलेति— स्थूलदेहादिसंबंधवतो देहाभिमानिनः पुरुषस्य सुखं च दुःखं च तथा शुभाशुभे पुण्यपापे भासतः विध्वस्तबंधस्य विगताहंकारस्य सदात्मनः ब्रह्मभूतस्य मुनेः कुतः शुभं पुण्यं कर्म संभवति अशुभं पापं वापि कथं संभवति फलं वा सुखं वा दुःखं कथं संभवति न कथमपीत्यर्थः तयो-

देहाध्यासपूर्वकत्वादिति ॥ ४७ ॥ अत्रोदाहरणमाह तमसेति— रविग्रहणे यथासूर्याधःस्थितेन तमसा राहुणा ततोप्यधः स्थितपुरुषदृष्टिर-
विमण्डलयोरन्तरं क्रियते ततो रविस्तमसा ग्रस्तइव प्रतीयते तदा रविरग्रस्तोपि ग्रस्त इत्युच्यते भ्रान्त्या तत्तु वस्तुलक्षणं रविस्वरूपम-
ज्ञात्वैवोच्यते तद्वत् ॥ ४८ ॥ तद्वत् रविवत् ब्रह्मवित्तमं देहादिबंधेभ्यो विमुक्तमपि विमूढा देहाभासदर्शनात् तं देहवन्तमिव पश्यंति नतु

तमसा ग्रस्तवद्भानादग्रस्तोपि रविर्जनैः ॥ ग्रस्त इत्युच्यते भ्रांत्या ह्यज्ञात्वा वस्तुलक्षणम् ॥ ४८ ॥
तद्वद्देहादिबंधेभ्यो विमुक्तं ब्रह्मवित्तमम् ॥ पश्यन्ति देहवन्मूढाः शरीराभासदर्शनात् ॥ ४९ ॥
अहिर्निर्ल्वयनीवायं मुक्त्वा देहं तु तिष्ठति ॥ इतस्ततश्चाल्यमानो यत्किंचित्प्राणवायुना ॥ ५० ॥
स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम् ॥ दैवेन नीयते देहो यथाकालोपभुक्तिषु ॥ ५१ ॥

विचारशालिन इत्यर्थः ॥ ४९ ॥ अथ चायमारूढावस्थापन्नो अहिरिवेति इवार्थे वशब्दः यथा सर्पोनिल्वयनीं कञ्चुकं त्यक्त्वा तत्राहंभावं न
करोति तथायं विद्वान् देहं त्यक्त्वा तत्राभिमानं त्यक्त्वा तिष्ठति तथा देहः प्राणवायुना यत्किंचिदितस्ततश्चाल्यमानो वर्तते ॥ ५० ॥ यथा
स्रोतसा चाल्यमानं दारु निम्नोन्नतस्थलं नीयते तथा दैवेनारब्धकर्मणा देहो यथा कालोपभुक्तिषु नीयते न तु तदारंभककर्मक्षयं विना

क्षीयते इत्यर्थः ॥ ५१ ॥ ननु जीवन्मुक्तस्य विदेहस्य देहः कथं तिष्ठतीत्यत आह प्रारब्धेति— मुक्तदेहः जीवन्मुक्तस्य देहः प्रारब्धकर्मप-रिकल्पितवासनाभिर्जीवन्मुक्तस्य सकलवासनाक्षयेपि शरीररक्षार्थं प्रारब्धकर्मणा वासनाः परिकल्पन्ते ताभिर्वासनाभिर्भुक्तिष अन्ननि-गीर्णादिकर्मसु संसारिवच्चरति साभिमानवद्भुङ्क्तेऽत्र अस्मिन्नवसरे सिद्धः स्वयंसाक्षिवत्तूष्णीं वसति कल्पविकल्पशून्यः सर्वसंशयरहितः

**प्रारब्धकर्मपरिकल्पितवासनाभिः संसारिवच्चरति भुक्तिषु मुक्तदेहः ॥ सिद्धः स्वयं वसति साक्षिवदत्र तूष्णीं चक्रस्य मूलमिव कल्पविकल्पशून्यः ॥ ५२ ॥ नैवेन्द्रियाणि विषयेषु नियुङ्क्त एष नैवापयुङ्क्तउपदर्शनलक्षणस्थः ॥ नैव क्रियाफलमपीषदवेक्षते स स्वानन्दसान्द्ररसपानसुमत्तचित्तः ॥ ५३ ॥**

चक्रस्य कुलालभ्रमणचक्रस्य मूलमिव काष्ठमिव विद्वान् विकारशून्यस्तिष्ठतीत्यर्थः ॥ ५२ ॥ तर्हि देहेयं विद्वान् कथं तिष्ठतीत्यत आह नैवेति— एषविषयेषु शब्दादिषु इंद्रियाणि श्रोत्रादीनि न नियुङ्क्ते न चालयति नैवापयुङ्क्ते न निवारयति वा विषयेभ्यः उदासीनतया स्थित इंद्रियैः क्रियमाणस्य कर्मणः फलं दर्शनश्रवणादिकं ईषदपि अणुमात्रमपि स नावेक्षते न पश्यति कुतो नावेक्षते यतः सानन्दस्य

आनन्दरूपस्य सांद्रस्य सघनस्यातिमिष्टस्य रसस्य रसोवै स इति श्रुतेर्ब्रह्मानन्दरसस्य यत् पानमनुभवनं तेन सुमत्तमात्मसञ्ज्ञारहितं चित्तं यस्य सः तस्मान्नावेक्षत इत्यर्थः ॥ ५३ ॥ जीवन्मुक्तेः स्वरूपमाह लक्ष्येति— लक्ष्यं प्रमेयं बुद्ध्यादि विषयं अलक्ष्यं अप्रमेयं अविषयतयैवातिसूक्ष्मबुद्धिवेद्यं परंब्रह्म तयोर्लक्ष्यालक्ष्ययोर्गतिं गमनं साधनं लक्ष्यालक्ष्यगतिर्विषयचिंतनं निदिध्यासनं वा द्वयमपित्यक्त्वा प्राप्तसमाधिः सकृतकरणीयोऽपरिशिष्टकिंचित्करणीयो यः केवलात्मना स्वरूपनिष्ठ एव तिष्ठेत्स ब्रह्मविदुत्तमः साक्षात्प्रत्यक्षः शिव एव वन्द-



लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत्केवलात्मना ॥ शिवएष स्वयं साक्षादयं ब्रह्मविदुत्तमः ॥ ५४ ॥
जीवन्नेव सदामुक्तः कृतार्थो ब्रह्मवित्तमः ॥ उपाधिनाशाद्ब्रह्मैव सन् ब्रह्माप्येति निर्द्वयम् ॥ ५५ ॥
शैलूषो वेषसद्भावाभावयोश्च यथापुमान् ॥ तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैवनापरः ॥ ५६ ॥

नीय इत्यर्थः ॥ ५४ ॥ एष ब्रह्मवित्तमः विदेहमुक्तो जीवन्नेव सदामुक्तः कृतार्थोयं प्रथममपि ब्रह्मैव सन् इदानीमुपाधिनाशान्निर्द्वयं ब्रह्मैवाप्येति स्वरूपस्थितोभवतीत्यर्थः ॥ ५५ ॥ अत्र दृष्टान्तमाह शैलूषइति—यथा शैलूषो नटो व्याघ्रवेषं कृत्वा जनान् रंजयति स वेषात्पूर्वमपि वेषवेलायां वेषत्यागादूर्द्ध्वमपि पुमानेव तथैव ब्रह्मविद्वरिष्ठःत्यक्तदेहाभिमानः स्वरूपस्थो ब्रह्मैव त्यक्तपदार्थभानत्वादिति ॥ ५६ ॥

न तस्य सत्क्षेत्राद्यपेक्षेत्याह यत्रेति— यथा तरोः पत्रं सद्भूमौ वाऽसद्भूमौ वा यत्रकुत्रापि पतेन्न तरोः किंचित्तत्संसर्गः एवं विदुषोर्यंतेर्वपुः पततात् तत्तु ब्रह्मीभूतस्य प्रागेव मरणात् चिदग्निना दग्धमिति ॥ ५७ ॥ तस्य देहत्यागाय न देशापेक्षेत्याह शिष्यसंतोषार्थं सदात्मनीति— पूर्णाद्वयानन्दमयात्मना सद्रूपे आत्मनि आत्मभूते ब्रह्मणि सदा तिष्ठतो मुनेः त्वङ्मांसविट्पिण्डस्य शरीरस्य

यत्र क्वापि विशीर्णं सत्पर्णमिव तरोर्वपुः पततात् ॥ ब्रह्मीभूतस्य यतेः प्रागेव तच्चिदग्निना दग्धम् ॥ ५७ ॥ सदात्मनि ब्रह्मणि तिष्ठतो मुनेः पूर्णाद्वयानन्दमयात्मना सदा ॥ न देशकालाद्युचितप्रतीक्षा त्वङ्मांसविट्पिण्डविसर्जनाय ॥ ५८ ॥ देहस्य मोक्षो नो मोक्षो न दण्डस्य कमण्डलोः ॥ अविद्याहृदयग्रंथिमोक्षो मोक्षो यतस्ततः ॥ ५९ ॥

विसर्जनाय त्यागाय न देशकालाद्युचितानां स्थानादीनां प्रतीक्षास्ति तस्य जीवतएव त्यक्तदेहत्वादित्यर्थः ॥ ५८ ॥ मोक्षस्य वास्तवस्वरूपमाह देहेति— यतः कारणादविद्याकृताया हृदयग्रंथेरात्मांतःकरणतादात्म्याध्यासरूपाया मोक्षो निवृत्तिरेव मोक्षः ततः कारणात्

विं०चू० केवलस्य देहस्य केवलयोर्दण्डकमण्डल्वोर्मोक्षस्त्यागो वा न मोक्ष इति ॥ ५९ ॥ अत्र निदर्शनमाह कूल्यायामिति— यदि तरोः पर्णं पत्रं कूल्यायां सटी०
अथवा नद्यां अथवा शिवालये शिवक्षेत्रे काश्यां केदारे वा चत्वरे अनेकमार्गसमुदाये वा पतति चेत् तेन तरोः शुभाशुभं किंनु भवति
॥ ९८ ॥ किन्तु न भवतीत्यर्थः ॥ ६० ॥ पत्रस्य पुष्पस्य फलस्य च विनाशाद्यथा वृक्षस्य बिनाशो न भवति तथा देहेन्द्रियप्राणधियां विनाशात् अ०
९

कूल्यायामथनद्यां वा शिवक्षेत्रेपि चत्वरे ॥ पर्णं पतति चेत्तेन तरोः किंनु शुभाशुभम् ॥६०॥
पत्रस्य पुष्पस्य फलस्य नाशवद्देहेन्द्रियप्राणधियां विनाशः ॥ नैवात्मनःस्वस्य सदात्मकस्या-
नन्दाकृतेर्वृक्षवदस्ति चैषः ॥ ६१ ॥ प्रज्ञानघनइत्यात्मलक्षणं सत्यसूचकम् ॥ अनूद्योपाधिकस्यैव
कथयंति विनाशनम् ॥ ६२ ॥ अविनाशी वा अरे यमात्मेति श्रुतिरात्मनः ॥ प्रब्रवीत्यवि-
नाशित्वं विनश्यत्सु विकारिषु ॥ ६३ ॥

तेषामेवदेहादीनां विनाशः सदात्मकस्य सद्रूपस्य स्वस्यस्वरूपभूतस्यानन्दाकृतेरानन्दमूर्तेरात्मनो बिनाशो न भवतीति ॥ ६१ ॥ अत्रार-
ण्यकश्रुतिं प्रमाणमाह प्रज्ञानेति— याज्ञवल्क्यो मैत्रेयीं प्रत्याह तत्र श्रुतयः प्रज्ञानघनएवैतेभ्यो भूतेभ्यः समुत्थायेत्याद्याः सत्यसूचकं ॥ ९८ ॥
प्रज्ञानघनइत्यात्मलक्षणमनूद्योपाधिकस्यैव विनाशनं कथयंतीति ॥ ६२ ॥ तथा अविनाशी वा अरे यमात्माऽनुच्छित्तिधर्मेति श्रुतिरपि

विकारिषु प्रविनश्यत्सु आत्मनोऽविनाशित्वं प्रब्रवीति ॥ ६३ ॥ प्रपंचस्यात्मनिलयदर्शनादात्मशेषत्वं मृत्तिकोदाहरणेनाह पाषाणेति- पाषाणवृक्षतृणधान्यकडंकाराद्याः कडंकरो बुसं एते पाषाणाद्या दग्धाः सन्तोहि यस्मात् यथा मृदेव मृत्तिकैव कालांतरेण भवंति तथैव देहेन्द्रियासु मनआदिसमस्तं दृश्यं ज्ञानाग्निना दग्धं सत् परमात्मभावं याति परं ब्रह्मैव संपद्यते इत्यर्थः ॥ ६४ ॥ विलक्षणस्य ब्रह्मणि

पाषाणवृक्षतृणधान्यकडंकराद्या दग्धा भवंति हि मृदेव यथा तथैव ॥ देहेन्द्रियासु मन-आदिसमस्तदृश्यं ज्ञानाग्निदग्धमुपयाति परात्मभावम् ॥ ६४ ॥ विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि ॥ तथैव सकलं दृश्यं ब्रह्मणि प्रविलीयते ॥ ६५ ॥ घटे नष्टे यथा व्योम-व्योमैव भवति स्फुटम् ॥ तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥ ६६ ॥

लये दृष्टान्तमाह विलक्षणमिति- यथा ध्वांतमंधकारो रवितेजोविलक्षणमपि भानुतेजसि लीयते प्रभातसमये तथैव सकलं विश्वं दृश्यं आत्मविलक्षणं जडमपि ब्रह्मणि प्रविलीयते इति ॥ ६५ ॥ दृष्टान्तान्तरमाह घटइति- यथा घटे नष्टे सति घटान्तर्गतं व्योम व्योम एव भवति व्योमरूपेणैवावशिष्यते इति स्फुटं प्रसिद्धं तथैवोपाधिविलये अन्तःकरणाद्युपाध्यध्यासनिवृत्तौ ब्रह्मवित्स्वयं ब्रह्मैवेति ॥ ६६ ॥

अन्यदाह यथा क्षीरे दुग्धे क्षिप्तं क्षीरं तथा तैले क्षिप्तं तैलं तथा जले क्षिप्तं जलं एकजातीयत्वात् एकरूपत्वादेकवस्तुत्वाच्च संयुक्तं सदे-
कतां याति तथात्मवित् तत्वज्ञानेनात्मना संयुक्त आत्मन्येकतां यातीति ॥ ६७ ॥ एवमुक्तप्रकारेणाखण्डितं परिपूर्णं सन्मात्रत्वं सद्रूपा-
॥ ९९ ॥ त्ममात्रं ब्रह्मभावं ब्रह्मात्मतां विदेहकैवल्यं प्रपद्य संप्राप्यैष यतिः पुनर्नावर्तते पुनः संसारभाग् न भवति यावत्प्रारब्धं कर्म तावल्लोक- अ०
दृष्ट्या जीवन्नेव दिव्येनमनसा विदेहमुक्तिमनुभूयात्मन्येव लयं प्राप्नोतीत्यर्थः ॥ ६८ ॥ तत्रोपपत्तिमाह सदात्मेति— सद्रूपेणात्मना एक- ९

क्षीरं क्षीरे यथाक्षिप्तं तैलं तैले जलं जले ॥ संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥ ६७ ॥
एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् ॥ ब्रह्मभावंप्रपद्यैष यतिर्नावर्तते पुनः ॥ ६८ ॥
सदात्मैकत्वविज्ञानदग्धा विद्यादिवर्ष्मणः ॥ अमुष्यब्रह्मभूतत्वाद्ब्रह्मणः कुत उद्भवः ॥ ६९ ॥
मायाक्लृप्तौबंधमोक्षौनस्तः स्वात्मनिवस्तुतः ॥ यथारज्जौनिष्क्रियायांसर्पाभासविनिर्गमौ ॥ ७० ॥

त्वविज्ञानेन दग्धानि अनात्मतया त्यक्तानि विस्मृतिमुपनीतानि अविद्यादिवर्ष्माणि शरीराणि पुर्य्यष्टकरूपाणियेन स सदात्मैकत्वविज्ञा-
नदग्धा विद्यादिवर्ष्मा तस्यामुष्यविदेहमुक्तस्य ब्रह्मभूतत्वात् ब्रह्मण उद्भवो जन्म कुतो न कुतोपीत्यर्थः ॥ ६९ ॥ अत्रोपपत्तिमाह मायेति— ॥ ९९ ॥
बन्धमोक्षौ मायाक्लृप्तौ अविद्यारचितौ अविद्याजनिताध्यासरूपौ वस्तुतः परमार्थतः स्वात्मनि नस्तः न भवतः यथानिष्क्रियायां सर्पो-

त्पादनासमर्थायां जडायां रज्जौ सर्पस्याभासः प्रतीतिः विनिर्गमः सर्पभासनिवृत्तिश्चोभौ मायाक्लृप्तौ रज्ज्वज्ञानरूपमायाकृतौ तद्वदित्यर्थः ॥ ७० ॥ तदा बन्धमोक्षौ किं निमित्तावित्यतआह आवृतेरिति— आवृतेरावणस्य सदसत्वाभ्यां बंधमोक्षणे वक्तव्ये ननु स्वतंत्रे इति सिद्धे ब्रह्मणस्तु काचिदप्यावृतिरावर्णं वस्तुतो नास्ति अन्याभावात् ब्रह्मणोऽन्यस्य द्वितीयस्याभावात् अतोऽनावृतं ब्रह्मेति निश्चय इति यदि आवृतिरस्तीति कश्चिद्वदेत् तदा अद्वैतहानिः स्यादिति ततः किमित्यत आह श्रुतिः मृत्योः समृत्युमाप्नोति य इह नानेव

आवृतेः सदसत्त्वाभ्यां वक्तव्ये बंधमोक्षणे ॥ नावृतिर्ब्रह्मणः काचिदन्याभावादनावृतम् ॥ ७१ ॥
यद्यस्त्याद्वैतहानिः स्याद्द्वैतं नो सहते श्रुतिः ॥७१॥ बंधंच मोक्षं च मृषैव मूढाः बुद्धेर्गुणं वस्तुनि
कल्पयंति॥ दृगावृतिं मेघकृतां यथारवौ यतोद्वयासंगचिदेतदक्षरम् ॥ ७२ ॥

पश्यतीति द्वैतं न सहते द्वैतनिंदां करोतीत्यर्थः ॥ ७१ ॥ बंधमोक्षौ तर्हि किं विषयावित्याशंक्याज्ञानवद्विषया[illegible] — बंधं च मोक्षं च बुद्धेर्गुणं धर्मं मूढा अनात्मज्ञा मृषैवानात्मज्ञतया वस्तुनि आत्मनि कल्पयंति कथमित्यतअ[illegible] तेन पुरुषस्य दृक् चक्षुराच्छाद्यते नाकाशेस्थितस्तेजः पूर्णः सूर्यः तादृगावृतिं मेघकृतां रवौ कल्पयंति यथा [illegible] ख्या[illegible]यतः अक्षरं

ब्रह्मैतत् अद्वयासंगं चिदेवेति ॥ ७२ ॥ बंधोस्ति अथवा नास्तीति द्वावपि प्रत्ययौ विकल्पौ वस्तुनि चिदात्मनि कल्पितत्वाच्च सं एतौ अस्ति-नास्तीति द्वौ बुद्धेरेव गुणौ नित्यस्य वस्तुनो गुणौ तु न संभवत इति ॥ ७३ ॥ यतस्तौ बुद्धेरेव गुणौ न चात्मनो नित्यस्य अतः कारणात्तौ बंधमोक्षौ मायया अज्ञानेन क्लृप्तौ निष्कले हानिवृद्धिरहिते निष्क्रिये शान्ते निरवद्यनिर्दोषनिरंजने अद्वितीये परे तत्वे आत्मनि न च संभवतः कुत इत्यतआह व्योमवत् कल्पना कुतः आकाशवदसंगे निरवयवे परिपूर्णे बंधमोक्षकल्पना कुतो न कुतोपीत्यर्थः ॥ ७४ ॥

अस्तीति प्रत्ययोयश्च यश्च नास्तीतिवस्तुनि॥बुद्धेरेवगुणावेतौ नतु नित्यस्य वस्तुनः ॥ ७३ ॥
अतस्तौ मायया क्लृप्तौ बंधमोक्षौ न चात्मनि॥ निष्कले निष्क्रिये शान्ते निरवद्ये निरंजने ॥
अद्वितीये परे तत्वे व्योमवत् कल्पना कुतः ॥ ७४ ॥ न निरोधो न चोत्पत्तिर्न बंधो न च
साधकः ॥ न मुमुक्षुर्नवै मुक्त इत्येषा परमार्थता ॥ ७५ ॥

अत्रैव गौडपादस्वामिनां कारिकापीत्याह न निरोधइति— प्रपंचस्य मायामूलत्वान्मायायाश्च स्वप्नमनोरथादिवन्मिथ्यात्वाद्व्यवहारदृष्ट्यैव सर्वकल्पना न तु परमार्थदृष्ट्या काचिदप्यस्ति जीवन्मुक्तस्य विदेहकैवल्यपदं प्राप्तस्य तु अखण्डैकरसात्मनिष्ठत्वान्न तस्य किंचिज्जगद्भानमस्ति मिथ्यादृष्टेर्विलीनत्वादिति तमुद्दिश्याह परमार्थतो न निरोधः प्रलयो नास्ति कुतो यतो न चोत्पत्तिः कस्यचिज्जन्मापि

नास्ति यत उत्पत्तिर्नास्ति जातस्यैवाहंकारादिबंधदर्शनाद्बंधोपि नास्ति बंधसत्वै एव तन्निवृत्यर्थं साधकः सन् तन्मोक्षोपायं करोति बंधाभावे साधकोपि नास्ति इति साधकत्वं तु मुमुक्षोरेव संभवति बंधाभावे कस्मान्मुमुक्षाभवेत् तदा मुमुक्षुरपि कश्चन नास्ति अत एव बंधाभावे मुक्तोपि कः स्यादित्येषा परमार्थता परमार्थतस्तु एकआत्मैवेत्यर्थः ॥ ७५ ॥ कृतोपदेशमुपसंहरति सकलेति— हे शिष्य मया त्वां अपगताकलेर्दोषा मात्सर्यादयो यस्मात्तं अपगतकलिदोषं कामेन निर्मुक्ता त्यक्ता बुद्धिर्यस्य स कामनिर्मुक्तबुद्धिस्तं सकलकामनार-

सकलनिगमचूडास्वान्तसिद्धान्तरूपं परमिदमतिगुह्यं दर्शितं ते मयाद्य ॥ अपगतकलिदोषं
कामनिर्मुक्तबुद्धिं स्वसुतवदसकृत्त्वां भावयित्वा मुमुक्षुम् ॥ ७६ ॥ इति श्रुत्वा गुरोर्वाक्यं प्रश्र-
येण कृतानतिः ॥ स तेन समनुज्ञातो ययौ निर्मुक्तबंधनः ॥ ७७ ॥

हितमित्यर्थः असकृत् अनेकवारं मुमुक्षुं भावयित्वा निश्चित्येति स्वसुतवत् यथा लोके जना यत्परमं गुह्यं तत्स्वसुतायैवोपदिशंति तद्वत् इदं परमतिगुह्यं सकलानां निगमचूडानां श्रुतिशिरसामुपनिषदां यत्स्वांतं गह्वरं गूढसिद्धांतं तदेव स्वरूपं यस्य परब्रह्मणस्तत्परं ब्रह्माद्य मया ते दर्शितं साक्षात्कारितं तत्र समाहितो भवेतिशेषः ॥ ७६ ॥ शिष्यकृत्यमाह इतीति— इति पूर्वोक्तं विदेहमुक्तिप्रभावप्रकारप्रतिपादकं गुरोर्वाक्यं श्रुत्वा प्रश्रयेण नम्रतया प्रणामं कृत्वा स शिष्यस्तेन गुरुणा सम्यक्तया प्रीत्या अनुज्ञातः निर्मुक्तबं[illegible] व्याख्यै निर्वि-

कल्पविदेहसमाध्यर्थमेकान्तस्थानं ययावित्यर्थः ॥ ७७ ॥ गुरोःकृत्यमाह गुरुरिति— गुरुः सदा सर्वदा आनन्दसिंधौ स्नात्वाच्च संधे निर्मग्नं परिलुप्तं मानसं यस्य सः सर्वां वसुधां पावयन् पवित्रीकुर्वन् निरंतरः सकलोपद्रवरहितः सन् विचचार यथासुखं विचचारेत्यर्थः ॥ ७८ ॥ श्रीमद्भगवत्पूज्यपादशङ्कराचार्योक्तिमाह इत्याचार्यस्येति— इत्युक्तेन प्रकारेणाचार्यस्य शिष्यस्य संवादेन मुमुक्षुणां सुखबोधस्य सिद्धये



गुरुरेव सदानन्दसिन्धौ निर्मग्नमानसः ॥ पावयन्वसुधां सर्वां विचचार निरन्तरः ॥ ७८ ॥
इत्याचार्यस्य शिष्यस्य संवादेनात्मलक्षणम् ॥ निरूपितं मुमुक्षूणां सुखबोधोपपत्तये ॥ ७९ ॥
हितमिदमुपदेशमाद्रियंतां विहितनिरस्तसमस्तचित्तदोषाः ॥ भवसुखविरताः प्रशान्तचित्ताः
श्रुतिरसिका यतयो मुमुक्षवो ये ॥ ८० ॥

आत्मलक्षणं आत्मस्वरूपप्रतिपादकं शास्त्ररहस्यं निरूपितम् ॥ ७९ ॥ मुमुक्षुजनोत्साहवर्द्धनाय तत्कर्तव्यमाह हितमिति ये मुमुक्षवो यतयः श्रुतिरसिकाः वेदांतेषु प्रीतियुक्ताः संसारसुखेभ्यश्च विरक्ता अतएव प्रशांतचित्ताः विहितनिरस्तसमस्तचित्तदोषाः वेदांतविहितेन श्रवणा-

दिना निरस्तः समस्ताश्चित्तदोषा यैस्ते सज्जना इदं हितमुपदेशमाद्रियन्तां सत्कारेणाङ्गीकुर्वन्तु इत्यर्थः ॥ ८० ॥ उक्तशास्त्ररहस्यमाहात्म्यमाह संसाराध्वनीति– एषा शङ्करस्य भारती निर्वाणसंदायिनी मोक्षसुखप्रदावाणी विजयते सर्वोत्कर्षेण वर्तते कीदृशीयमित्यतआह संसारमार्गे तापभानुकिरणप्रोद्भूतदाहव्यथाखिन्नानां तापास्त्रिविधास्तापा अध्यात्माधिभूताधिदैवरूपाः रोगशोकताडनतर्जनविद्युत्पातादिरूपास्तएव भानुकिरणास्तदुत्पन्नदाहव्यथया खिन्नानां जलाकांक्षया आत्मविवेकजलाकाङ्क्षया संसारमरुभुवि भ्रांत्या युक्तानां परिभ्राम्यतां

संसाराध्वनि तापभानुकिरणप्रोद्भूतदाहव्यथाखिन्नानां जलकांक्षया मरुभुवि भ्रांत्या परिभ्राम्यताम् ॥ अत्यासन्नसुधांबुधिं सुखकरं ब्रह्माद्वयं दर्शयत्येषाशङ्करभारती विजयते निर्वाणसंदायिना ॥ ८१ ॥

म्यतां पुरुषाणां आसन्नमतिसमीपे वर्तमानं स्वात्मभूतं सुखकरं अद्वयं ब्रह्मैव सुधांबुधिं अमृतसमुद्रं दर्शयंती प्रकाशं कुर्वंती श्रीशंकरभारतीत्यर्थः ॥ ८१ ॥ शिष्यं प्राह गुरुर्मया प्रकथितं वेदान्तगुह्यं परं तत्प्राप्तात्मसुखो विदेहकलनस्त्वं परंसंविश श्रुत्वाचार्यमुखाद्विदेहविभवं शिष्यः प्रमोदान्वितः स्वाङ्गप्तो गुरुणा ययौ नतशिराः कृत्वा प्रणामं मुहुः ॥ १ ॥ सारस्वतकुलोत्पन्न हरनामद्विजन्मना ॥ व्याख्याननवर-

T

त्तानां मालाशम्भुप्रिया कृता ॥ १० ॥ रसभूतनवेन्द्वब्दे भाद्रशुक्लाष्टमीबुधे ॥ सौम्यवाराणसीक्षेत्रे टीकेयं पूर्णतामगात् ॥ ११ ॥ इति श्रीजगाधरीनगरस्थसारस्वतवंशावतंस श्रीमन्मिश्रहरिधनपुरोहितात्मजश्रीमद्द्रविडवंशरत्नाकररत्नसामिशास्त्रिशिष्यवेदान्तनिष्ठपण्डितहरिनामदत्तविरचितायां विवेकचूडामणिटीकायांविदेहावस्थाख्यपदार्थाभावनीनामषष्ठभूमिकातुर्यगासप्तभूमिकानिरूपणोनाम नवमोऽध्यायः॥९॥

## इति श्रीमत्परमहंसपरिव्राजकाचार्य गोविन्दभगवत्पूज्यपादशिष्य श्रीमच्छङ्कराचार्यभगवत्कृतो विवेकचूडामणिः समाप्तः ॥

॥ श्रीसाम्बसदाशिवार्पणमस्तु ॥

॥ इदं पुस्तकं काश्यां चन्द्रप्रभायन्त्रालये मेहता जगन्नाथशर्मप्रबन्धानुसारेण मुद्रितम् ॥
वैक्रमीयसंवत् १९५८

# ॥ शुद्धिपत्रम् ॥

| पत्रं | पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
|---|---|---|---|---|
| २ | २ | १० | मक्ता | मुक्ता |
| ३ | २ | ३ | थं | थँ |
| ४ | १ | ७ | भवति | भवन्ति |
| ५ | २ | १० | नेम | नेन |
| ६ | १ | ९ | भात्र | मात्र |
| ६ | १ | ११ | स्वरूप | स्वस्वरूप |
| १० | १ | ९ | सभवति | संभवति |
| ११ | १ | १० | करी | झरी |
| १२ | २ | ८ | गतः | यतः |
| १४ | १ | ९ | हस्तिना | हस्तिनां |
| १४ | १ | १० | बन्धति | बध्नंति |
| १५ | १ | ९ | एवेंति | एवेति |
| १५ | २ | ४ | सः | स |
| १६ | २ | ९ | त्रिशेषा | विशेषा |
| २१ | २ | १० | सँवीत | सर्वेति |
| २२ | १ | ३ | मायामाया | माया |
| २२ | १ | ६ | यन्त | र्यन्त |
| २२ | १ | ९ | त्सु | सु |
| २३ | १ | ३ | तंते | र्तन्ते |
| २४ | २ | १ | पुरुस्य | पुरुषस्य |

| पत्रं | पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
|---|---|---|---|---|
| २४ | २ | ८ | तस्मिन् | अतस्मिन् |
| २६ | १ | २ | दुःखै | दुःखैः |
| २१ | १ | ४ | पनैः | पद्मैः |
| २७ | २ | ३ | तृणा | तृण |
| ३० | २ | ३ | स्वप्नमिति | स्वप्नइति |
| ३२ | २ | ४ | मिष्टो | निष्ठो |
| ३२ | २ | २ | ह्ला | ह्ल |
| ३४ | २ | ६ | बुद्धे | वुद्धे |
| ३५ | १ | ८ | विद्य | विद्यायां |
| ३५ | २ | ६ | संम्य | सम्यग् |
| ३५ | २ | २ | सम्यक् | सम्यग् |
| ३६ | १ | १ | बोधे | वाधे |
| ३६ | २ | ७ | साक्षो | साक्षी |
| ३७ | २ | ८ | कम्पा | कस्या |
| ३८ | १ | २ | मिस्य | मित्य |
| ३८ | १ | १० | बिंबतया | प्रतिबिंबतया |
| ३८ | २ | ६ | लक्षम् | लक्षणम् |
| ३९ | १ | ३ | नाववर्तते | नावर्तते |
| ४० | १ | १० | नारिक्तं | नातिरिक्तं |
| ४२ | २ | ३ | गृह्यते | गृह्यते साजहतीवृत्तिर्यथा गंगायांघोषः |



॥ १ ॥

| पत्रं | पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् | पत्रं | पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
|---|---|---|---|---|---|---|---|---|---|
| | | | | अत्र गंगापद | ४८ | २ | ४ | द्यावृति | द्वयावृत्ति |
| | | | | वाच्यंप्रवाहंत्य | ४८ | २ | ७ | अन्वप | अन्वय |
| | | | | च्चातीरं लक्ष्यते | ४९ | १ | २ | ऽऽत्म्यत्वं | ऽऽत्मैकत्वं |
| | | | | यत्र तु वाच्या | ५४ | १ | १ | चितो | सेचित्तः |
| | | | | र्थं गृहीत्वाल- | ५४ | १ | १ | अर्थे | अर्थ |
| | | | | क्ष्यार्थोऽपिगृह्यते | ५४ | २ | ८ | ” | ” |
| ४२ | २ | ८ | लक्षणया | लक्षणाया | ५६ | २ | १ | योनिदेषु | योनिदेषुकुत्सितकर्मसु |
| ४३ | १ | ११ | मृद | मृदि | ५७ | १ | २ | तोय | तोर्य |
| ४४ | १ | ३ | षोर्वि | षोवि | ५८ | १ | १ | निष्टेत् | तिष्ठेत |
| ४५ | १ | २ | विक्षक्षणं | विलक्षणं | ५९ | १ | १ | क्तद | क्तइ |
| ४७ | २ | ८ | निष्टा | आत्मनिष्टा | ५९ | १ | २ | स्तोति | स्तौति |

| पत्रं | पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
|---|---|---|---|---|
| ५९ | १ | ३ | मुवत्यु | मुक्त्यु |
| ५९ | १ | ४ | तसौ | तेसौ |
| ६० | २ | ८ | परति | परेति |
| ६० | २ | २ | शून्यो | शून्यो |
| ६४ | २ | ४ | चिंतन, | चिंतनं |
| ६६ | १ | १० | वराग्येति | वैराग्येति |
| ६६ | २ | ९ | पाटे | पाठे |
| ६६ | २ | १० | अभिमति | अभिमतिं |
| ६७ | १ | ८ | आत्मना | आत्मनः |
| ६७ | २ | ३ | कोशे | कोशो |
| ६७ | २ | ४ | लण | लक्षण |
| ७० | २ | १ | जहाति | जहीति |
| ७२ | १ | ८ | निरीक्षतः | निरीक्षितः |
| ७२ | १ | ८ | त्यर्थः अत्र | त्यर्थ ४०५ अत्र |
| ७२ | १ | १० | राहपष्ठ्यौ | राहपुष्ठ्यौ |
| ७३ | २ | ९ | निर्मुक्त | निर्मुक्तं |
| ७५ | २ | ४ | ज्ञानतः | ज्ञानवतः |
| ७५ | २ | ९ | नेत्यर्थः | नेत्यर्थः४२३ विदुषो अप्रवृत्तौ हेतुमाह अज्ञानेति यदि |
| ७५ | २ | ११ | तथा | तदा |

॥ २ ॥

| पत्रं | पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
| --- | --- | --- | --- | --- |
| ७७ | १ | ७ | दाष | दोष |
| ७७ | २ | १ | ३५ | ३५ पुनराह |
| ७७ | २ | १० | देहाद्भिन्ने | देहादिभिन्ने |
| ७८ | १ | २ | ज्ञानेन | ज्ञानेनन |
| ७८ | १ | ८ | पत्रीति | पत्रेति |
| ७८ | २ | १० | ब्रह्मणि | ब्रह्मणि अपिश-क्ति विशेषोस्ति तस्मिन् |
| ७९ | १ | ४ | कल्पते | कल्प्यते |
| ७९ | २ | ४ | नभइति | ननभइति |
| ७९ | २ | ४ | घठ | घट |
| ८३ | १ | ८ | उदारचित्ता: | उदारचित्त:स्वत:पूजार्ह: |

| पत्रं | पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
| --- | --- | --- | --- | --- |
| ८३ | १ | ९ | रूपे स्वरूपे | रूपं स्वरूपं |
| ८३ | २ | ७ | शास्त्रं | शास्त्रं |
| ८४ | १ | ८ | यथा | यथा यथावत् |
| ८४ | १ | ८ | एवं | एवयथा वद |
| ८४ | २ | २ | एषैव | राषैव |
| ८४ | २ | ८ | कारत्यर्थः | कारेत्यर्थः |
| ८५ | २ | २ | भुंजन् | भजन् |
| ८५ | २ | ८ | खंडा | अखंडा |
| ८६ | २ | ९ | श्रोतुः | श्रोतुर्वक्तुः |
| ८६ | २ | ११ | विषयं | विषयंअद:परोक्ष ज्ञानविषयं |
| ८८ | १ | १ | अहार्यवत् | अहार्यवत्पर्वतवत् |

T

| पत्रं | पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
|---|---|---|---|---|
| ८८ | २ | ४ | मुषुप्तयः | सुषुप्तयः |
| ९३ | २ | ७ | प्रमाणधीः | पदार्थधीः |
| ९३ | २ | ९ | लक्ष्यत्वादि | लक्ष्यत्वादिति |
| | | | | स्ववेदने स्वात्म- |
| | | | | ज्ञाने नियमाद्य |
| | | | | क्षा का न कापि |
| ९४ | १ | ९ | रहितं | रहितं शुक्तिरजतवद्व |
| ९४ | १ | ११ | विज्ञातारं | विज्ञातारं विना |
| | | | | असिद्धेःयेन वि- |
| | | | | ज्ञात्रास्वतंत्रेण |
| | | | | अर्थवन्तिलब्ध |
| | | | | सत्ताकानि भव- |

| पत्रं | पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
|---|---|---|---|---|
| | | | | न्तितं विज्ञातारं |
| ९५ | १ | २ | चारम्भक्रमणं | चारम्भ संक्रमणं |
| ९५ | २ | ३ | सर्वात्मा | सर्वात्मना |
| ९५ | २ | ४ | भाति | भातिक्वचि द्विद्वानूभाति |
| ९६ | १ | २ | एव | एष |
| ९६ | २ | ९ | तथा | तदा |
| ९७ | १ | २ | भुक्तिष | भुक्तिषु |
| ९८ | १ | २ | षोर्य | षोय |
| १०० | १ | १ | सर्प | सर्पा |
| १०० | २ | ३ | निष्क्रिय | निष्क्रये |
| १०१ | २ | ३ | शिष्यस्य | शिष्यस्यच |
| १०२ | १ | १ | निरस्तः | निरस्ताः |

॥ ३ ॥

विवेकचूडाणिनामकमिदंशास्त्रम् सकलनिगचूडास्वान्तसिद्धान्तरूपम् श्रीम-
रस्वामिभगवत्पादश्रीशङ्कराचार्यविरचितम् । जगाधारीनगरनिवासि
श्रीसारस्वतवंशावतंस मिश्रहरिधनपुरोहितात्मज वेदान्तनिष्ठ
पं० हरनामदत्तविरचितया सुबोधिनीव्याख्ययासमलंकृतम्
श्रीपण्डितहरद्वारीलाल सिन्धुदेशीय पण्डितदेवजीरामाभ्यां
लोकोपकाराय चन्द्रप्रभायन्त्रालये मुद्रापितम् ॥

यह पुस्तक बनारस कुंजगली में पंडित हरिद्वारी लाल जी से
बिना कीमत के ही मिलेगी ॥

